॥ श्रीराधासर्वेश्वरो विजयते ॥



॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

# श्रीनिम्बार्कचरितम्

सुदर्शनचक्रावतार श्रीभगवन्निबार्काचार्य

* श्रीसर्वेश्वरो जयति *



॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

# श्रीनिम्बार्कचरितम्

लेखकाः-


अनन्तश्रीविभूषित-जगद्गुरु-श्रीनिम्बार्काचार्यपीठाधीश्वराः

श्रीराधासर्वेश्वरशरणदेवाचार्य श्री "श्रीजी" महाराजाः

अखिलभारतीय श्रीनिम्बार्काचार्यपीठम्, निम्बार्कतीर्थम्

( सलेमाबादः ) पुष्करक्षेत्रम्, ( अजमेर-किशनगढ ) राजस्थानम्

सम्पादकः

**प्रो. ( डॉ. ) श्रीप्रभाकर शास्त्री**

हिन्दी भाषानुवादकः

**पं० श्रीदयाशङ्कर शास्त्री**

प्रकाशक :-

**श्रीनिम्बार्काचार्यपीठ शिक्षा समिति**

निम्बार्कतीर्थ–सलेमाबाद

जि० अजमेर ( राजस्थान ) ३०५८१५

फोन नं. ०१४६७--२२७८३१

संस्करण :

कार्तिक शुक्ल पूर्णिमा शुक्रवार

श्रीनिम्बार्क जयन्ती महोत्सव

वि० सं० २०६१

दिनाङ्क-२६/११/२००४

मूल्य : २० रुपये ( बीस रुपये )

लेजर सैटिंग :-

**श्रीनिम्बार्क-मुद्रणालय**

निम्बार्कतीर्थ – सलेमाबाद

जि० अजमेर ( राज० )

मुद्रक :-

**प्रिन्ट-ओ-लेण्ड**

हवा सड़क, जयपुर

॥ श्रीसर्वेश्वरो जयति ॥

॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

# समर्पण

सुदर्शनमहाचक्रा-वतार ! श्रीजगद्गुरो ! ।
आद्याचार्य ! सदा वन्द्य ! सर्वेश्वरार्चनारत ! ॥

श्रीनिम्बार्क ! कृपासिन्धो ! शरण्य ! करुणार्णव ! ।
चरितं ते परं दिव्य-माविर्भूतञ्च पावनम् ॥

न कवित्वं न वैदुष्यं नहि शास्त्रानुशीलनम् ।
त्वत्कृपामात्रसञ्जातं सङ्क्षिप्तं चरितं प्रियम् ॥

निम्बार्कचरितं चारु सर्वलोकहितावहम् ।
अर्प्यते श्रद्धया भक्त्या श्रीनिम्बार्कपदाब्जयोः ॥

कार्तिक शुक्ल पूर्णिमा शुक्रवासरः
श्रीनिम्बार्क जयन्ती महोत्सवः
वि. सं. २०६१
दिनाङ्कः - २६/११/२००४

श्रीचरणाम्बुजरसभक्तिकामः-
**श्रीराधासर्वेश्वरशरणदेवाचार्यः**

# विषय - सूची

# शुद्धि पत्रम्

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| विभूतिनां | विभूतीनां | ६ | ३ |
| विशेषस्तच्चरणयोः | विशेषतस्तच्चरणयोः | ६ | ७ |
| अकादमया | अकादम्या | ७ | ७ |
| दर्शनाध्येतृणां | दर्शनाध्येतृणां | ७ | १४ |
| भारतीसदर्शनस्य | भारतीयदर्शनस्य | ६ | १८ |
| सदाद्याचार्याणां | यदाद्याचार्याणां | १० | १६ |
| मन्यते | मन्यन्ते | ११ | २४, २६ |
| फतितार्थो | फलितार्थो | १२ | ३ |
| तन्मन्यते | तन्मन्यन्ते | १२ | ६ |
| मन्यते | मन्यन्ते | १२ | ६ |
| साम्प्रतिका ध्येतृणां | साम्प्रतिकाध्येतृणां | १२ | २५ |
| एतमेव | एवमेव | १३ | १० |
| जगन्नाथेति | जगन्नाथ इति | १३ | १० |
| येन सर्वविधाः पाठकास्त- | येन सर्वविधेभ्यः पाठकेभ्य- | | |
| मिममभिरोचयिष्यन्ति | स्तदिदमभिरोचिष्यते | १४ | ३ |
| कस्तूरिकाऽऽमोदं | कस्तूरिकाऽऽमोदः | १४ | १२ |
| श्रीयुगलगगीतिशतकम् | श्रीयुगलगीतिशतकम् | १५ | १६ |
| समेषामेषां रचनानामध्ययेन | समासामासां रचनाना- | | |
| | मध्ययनेन | १७ | ३ |
| संस्कृत भाषयामुपनिबद्धस्य | संस्कृतभाषायामुपनिबद्धस्य | १८ | १ |
| महाराजैर्निर्मिता | महाराजैर्निर्मितां | १६ | १० |
| कृति निभाल्य | कृतिं च निभाल्य | १६ | १० |
| कुशेशयेशय | शयकुशेशय | २० | १० |
| श्रेयसः | श्रेयः | २० | १० |
| प्रसिद्धिमवाप्तम् | प्रसिद्धिं गतम् | २४ | २२ |
| तपः स्थलेऽवस्थाय | तपःस्थलमवस्थाय | २४ | २३ |

# शुद्धि पत्रम्

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| चिन्तातुरा अभवाम | चिन्तातुराः स्मः | ७३ | २४ |
| चतुर्दिक्षु | चतुर्दिशम् | ७६ | ७ |
| श्रीमद्‌भभगव | श्रीमद्भगव | ७६ | ७ |
| महात्मनो | महात्मानो | ७७ | ४ |
| परमथ | परमत्र | ८१ | १४ |
| नश्नन्यो | नश्नन्नन्यो | ८३ | २ |
| आत्मरति आत्मक्रीड | आत्मरतिः, आत्मक्रीड | ८३ | ६ |
| कूटस्थोऽक्षर उच्चते | कूटस्थोऽक्षर उच्यते | ८३ | १५ |
| क्रीडनन्रममाणः | क्रीडन् रममाणः | ८४ | ८६ |
| सौरभाऽख्य | सौरभाऽऽख्य | ८५ | २३ |
| आत्मरति आत्मक्रीड | आत्मरतिः, आत्मक्रीड | ८४ | ८ |
| आत्मकृतः परिणायात् | आत्मकृतेः परिणामात् | ८६ | ९ |
| फदातृत्वच्य | फलदातृत्वाच्च | ८७ | १ |
| तद्विवषयकत्वेन | तद्विषयकत्वेन | ८७ | ७ |
| औपनिषदां सिद्धान्तः | औपनिषदानां सिद्धान्तः | ८७ | १७ |
| 'तत्रकार्यपरत्वव्याप्यं वेद प्रामाण्यम्' | 'अयमंशोऽधिकरूपेण-मुद्रितः' (पुनरुक्तः) | ८९ | ४ |
| प्राणाण्यमस्ति | प्रामाण्यमस्ति | ८९ | ६ |
| स्वाध्यायोऽधेतव्य | स्वाध्यायोऽध्येतव्य | ८९ | ११ |
| ध्वात्वार्थे | धात्वर्थे | ८९ | २६ |
| विरोधिरूपस्याऽऽदि | विरोधिरूपस्याऽऽपि | ९२ | २० |
| लावण्यद्यनन्त | लावण्याद्यनन्त | ९६ | १ |
| भवगन्निम्बार्का | भगवन्निम्बार्का | ११६ | १ |

*

# अनुवादकीय

## गद्यं कवीनां निकषं वदन्ति

हमारे परमाराध्य अखिल भारतीय निमबार्काचार्यपीठाधीश्वर, अनन्त श्रीविभूषित जगद्गुरु निम्बार्काचार्य श्री ''श्रीजी'' श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज द्वारा अपनी सारस्वत आराधना के अन्तर्गत निरन्तर सारस्वत कोष की श्रीवृद्धि हो रही है, यह विद्वद्वृन्द एवं भक्तवृन्द के लिए परम हर्ष व गौरव का विषय है । श्रीचरणों द्वारा सुरभारती तथा राष्ट्र भाषा हिन्दी में रचित कुछ ग्रन्थों का राजस्थान विश्वविद्यालय एवं माध्यमिक शिक्षा बोर्ड, अजमेर द्वारा संचालित परीक्षाओं के पाठ्यक्रम में समावेश होने से शिक्षा के क्षेत्र में भी ग्रन्थों के महत्व में विशेष अभिवृद्धि हुई है । अतः उक्त परीक्षाओं के संचालक अधिकारी बन्धु, आचार्यपीठस्थ विद्वत् परिषद् के सदस्य बंधाई के पात्र हैं।

आचार्यश्री द्वारा संस्कृत में रचित अनेक पद्य (श्लोकबद्ध) ग्रन्थ प्रकाशित हो चुके हैं । आपश्री द्वारा सुरभारती (संस्कृत) गद्य मौलिक अभिनवकृति ''श्रीनिम्बार्कचरित'' संस्कृत गद्य साहित्य की विशेष शोभा बढाने वाला एक लोकप्रिय ग्रन्थ होगा । संस्कृत साहित्य में जितना आधिक्य छन्दोबद्ध (पद्य) ग्रन्थों का है, उतना गद्य साहित्य का नहीं। इसका कारण संस्कृत साहित्य के मनीषियों ने बताया है कि 'गद्यं कवीनां निकषं वदन्ति'। गद्य साहित्य में भी रस-भाव अलंकार एवं प्रसाद गुण सम्पन्न साहित्य की महिमा अधिक मानी जाती है । ''श्रीनिम्बार्कचरित'' पढते समय महाकवि अम्बिकादत्त व्यास कृत 'शिवराज विजय' गद्य ग्रन्थ की शैली का संस्मरण स्वाभाविक ही हो आता है । भाषा माधुर्य और सारल्य सहज ही पाठक के संस्कृत हृदय को आकर्षित किये बिना नहीं रहता ।

भगवान् श्रीनिम्बार्क का मङ्गलमयचरित अनेक ग्रन्थों में उपलब्ध होता है, किन्तु एक ही ग्रन्थ में सरलतम प्रामाणिक ''निम्बार्कचरित'' की निम्बार्कजगत् में परमापेक्षा थी, जिसकी पूर्ति आचार्यश्रीचरणों द्वारा सम्पन्न हुई है ।

निम्बार्क जगत् के समस्त भक्तवृन्द में ग्रन्थ की उपादेयता को ध्यान में रखते हुए, ग्रन्थ के हिन्दी अनुवाद की भी परम आवश्यकता का अनुभव करते हुए परमपूज्य आचार्यश्री द्वारा मुझ अकिंचनजन को हिन्दी अनुवाद करने के लिए परम अनुग्रहस्वरूप आज्ञा प्रदान हुई । मेरा सौभाग्य है कि अनुवाद के निमित्त श्रीचरणों द्वारा रचित श्रीनिम्बार्कचरित ग्रन्थ का अक्षरशः अध्ययन करने का मंगलमय अवसर प्राप्त हुआ । निर्देशानुसार राष्ट्रभाषा में जो अनुवाद सम्पन्न हुआ है, वह श्री चरणों की सेवा में इस भाव से सादर सप्रश्रय प्रस्तुत है कि-**त्वदीयं वस्तुगोविन्द तुभ्यमेव समर्पये** ।


शिक्षामन्त्री :
अ. भा. श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ
सलेमाबाद ( अजमेर-राजस्थान)

श्रीचरणकमलचञ्चरीक
**दयाशंकरशास्त्री**
पुराणेतिहास-साहित्याचार्य, एम.ए.

# पुरोवाक्

**देवर्षि कलानाथ शास्त्री**

देशस्यास्येतिहासेऽमरत्वमुपेयुषां ब्रह्मोद्भववाङ्मयसुधासागराणां, भक्तिमार्गप्रवर्तकानामाचार्याणां पङ्क्तावग्रगण्यानां चतुर्णां श्रीरामानुज-निम्बार्क-मध्व-वल्लभाख्यानां विभूतिनां मध्येऽपूर्वमेव कंचन महिमातिशयं बिभ्रति प्रातःस्मरणीयाः श्रीसुदर्शनचक्रावतारा द्वैताद्वैत-जाह्नवीभगीरथाः श्रीनिम्बार्काचार्यपादाः । एभिः प्रवर्तितो भक्तेः पन्थाः कोटिशो भारतीयान् भागवतवीथीपथिकान् विधाय शताब्दीभ्यस्तेषां निःश्रेयसमनुष्ठितवानिति को न वेत्ति ? वयं राजस्थानीया विशेषस्तच्चरणयोः श्रद्धाभरनिर्भरा, यतो हि निम्बार्कीयस्य सम्प्रदायस्य प्रमुखं पीठमिहैव राजस्थानराज्येऽजयमेरुजन-पदान्तर्वर्तिनि किशनगढनगरोपकंठस्थे सलेमाबादाख्ये निम्बार्कतीर्थेति यशोनाम बिभ्रति ग्रामे प्रतिष्ठितमस्ति । भक्तिमार्गस्य प्रमुखेऽस्मिन्नाचार्य-चतुष्टये संप्रदायद्वयमेव तादृशं यस्य प्रधानपीठयो राजस्थानेऽवस्थित्या गौरवान्विताः सन्ति राजस्थानीया इति बहुशोऽहमुद्धरामि । निम्बार्क-सम्प्र-दायस्य प्रमुखं पीठं सलेमाबादे, वल्लभसम्प्रदायस्य च मेदपाटांचलस्थे राजसमन्दजनपदान्तर्भुक्ते श्रीनाथद्वारग्रामे वर्तते ।

**प्रणेतारः श्रीजीमहाराजाः**

श्रीनिम्बार्कसम्प्रदायस्य शताब्दीबहुलेतिहासभूषिता परम्परा संस्कृत-वाङ्मयस्याऽप्यमूल्यो निधिः । अयमपरः प्रमोदविषयो यदद्यत्वे प्रधानपीठ-मिदमलंकुर्वन्त आचार्यपादाः श्रीजीमहाराजेति ख्याताः श्रीराधासर्वेश्वरशरण-देवाचार्याः स्वयमौपनिषददर्शनस्य विशेषतो द्वैताद्वैतस्य धुरन्धरा विपश्चितः, संस्कृतभाषाया अधिकारिणो विद्वांसः, न केवलमिदमेव, अपितु सरसमधुराः कवयो, हैयङ्गवीनहृदयाः साहित्यसर्जकाश्च । श्रीनिम्बार्काचार्यपीठे एकादश-

वर्षीयेऽल्पे वयस्यभिषिक्तैरेभिः ( संवत् २०००) सश्रमं वेदवेदान्तपुराणादिविद्या अधिगताः । श्रीबालकृष्णदेवाचार्यैः स्वीय जीवनकाल एवैते उत्तराधिकारित्वेन मनोनीता अभूवन् । ततस्तु देशे सर्वत्र विद्यातीर्थेषु भ्राम्यद्भिरेभिः सर्वविद्यापारंगतत्वं तु संपादितमेव, सरसकाव्यनिर्माणमप्यभ्यस्तम् ।

एभी रचितानि भारतभारतीवैभवम्, भारतकल्पतरुः, प्रातःस्तवराजः, युगलगीतिशतकम् इत्यादीनि बहूनि काव्यानि परिज्ञातान्येव स्युः प्रेक्षावताम्। राजस्थान संस्कृत अकादमया तु १९९५ ई० वर्षे अतिविशिष्टविद्वत्संमानेनैते सभाजिता अपि । समारोहेऽस्मिन् राजस्थानस्य महामहिम्ना राज्यपालेन श्रीबलिरामभगतमहाभागेन सत्कृता इमे विशिष्टेनानेनालंकरणेन । एभिर्विरचितानि पद्यबद्धानि, गीतिबद्धानि वा काव्यानि तु भूयस्यां संख्यायां प्रकाशितान्यधीतान्येव स्युर्विद्वद्भिः किन्तु श्रीनिम्बार्काचार्यपादानां चरित्रमेभिर्गद्यकाव्ये निबद्धमिति निशम्य प्रासीदाम वयम् ।

**पुराणी परम्परा**

नाविदितं स्याद् भारतीयदर्शनाध्येतृणां यद् भगवतो निम्बार्काचार्यपादस्य स्थितिकालं जीवनवृत्तं चावलम्ब्य न खल्वैकमत्यं भारतीयेषु विद्वत्सु। वयं त्वास्तिका विश्वसिम एव यदनादिरनन्ता च खलु परम्परा श्रीसुदर्शनावताराणां निम्बार्कचरणानां संप्रदायस्य । द्वापरयुगान्ते श्रीमतामाविर्भावो मन्यते आस्तिकैः । पुराणादिषु, विद्वद्भिरचितेषु जीवनचरित्रेषु च बहुत्र तादृश एव संकेतो लभ्यते । भविष्यपुराणेऽप्यमीषां जीवनवृत्तं वर्णितं , तच्च प्रमाणभूतम्, इत्यास्तिकानां बहूनां विदुषामभिमतम् । मा भूदेतेषां नाम श्रीमद्भागवते समुल्लिखितं, किन्तु श्रीमद्भागवत उदाहृतेषु भगवदवतारेषु हंसावतारस्यास्ति निगूढः कश्चनोल्लेखः । भागवतीयैकादशस्कन्धे सनकादिभिः पृष्टेन भगवता स्पष्टं वर्णितं यत्पुरा हंसरूपेण मया भक्तियोगस्य गुह्यं तत्त्वं प्रजापतये ब्रह्मणे समुपदिष्टं तत्र च स्पष्टीकृतं यत्कथं गुणानामहंकारादीनां च बन्धविगलनं तीर्त्वा सांख्ययोगादिभिरप्यगम्यं किंचन तत्त्वमवबुध्य जीवो मामुपैति । विष्णो-

श्चतुर्विंशत्यवतारेषु तस्यैव हंसावतारस्य परिगणना क्रियते इति भागवतानां संप्रदायोऽपि समधीतः स्याद् विद्वद्भिः । ततश्च तस्मादेवावतारान्निम्बार्क-प्रभोः परम्पराप्यवतीर्णा इति मूलेन सूत्रस्यास्य योजनां कृत्वा समादधति पारम्परिका विश्वासममुम् ।

श्रीमद्भागवतस्य द्वितीये स्कन्धे पद्यद्वयं सुदर्शनावतारस्य हंसावतारस्य च कंचन संकेतं प्रयच्छतीति तेषामाधारः--

**तुभ्यं च नारद भृशं भगवान् विवृद्ध-भावेन साधु परितुष्ट उवाच योगम्।**
**ज्ञानं च भागवतमात्मसतत्त्वदीपं यद् वासुदेवशरणा विदुरंजसैव ।**
**चक्रं च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो बिभर्ति ।**
**दुष्टेषु राजसु दमं व्यदधात् स्वकीर्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः ।**

( भाग. २/७/१९-२० )

अस्य हि प्रसङ्गस्य निर्वचनं "**नारदाय भगवतो हंसावतारेण भक्तियोगः कश्चनोपदिष्टोऽभूदित्येवं**" क्रियते । अनेनैव च साध्यते यत्सुदर्शनचक्रावताराणां तेजसो धारणं मन्वन्तरेषु कथं केन केन विहितमित्यादि। इमामेव परम्परां श्रीनिम्बार्काचार्यो वहतीति विश्वासोऽस्मादृशानामास्तिका-नाम् । श्रीमद्भागवतीयस्योपर्युद्धतस्य सन्दर्भस्य संगतिर्भागवतीये एकादशे स्कन्धे, यत्र हि भक्तियोगस्य विस्तृत उपदेश उद्धृतोऽस्ति, यश्च भक्तिमार्गस्य प्रवर्तकेषु स्रोतःसु प्रमुखः परिगण्यते, यद् विवृतं सनकादीनां प्रश्नमुत्तरयता भगवता, यच्च स्पष्टीकृतं समस्तेऽपि स्कन्धे, विशेषतश्च त्रयोदशे चतुर्दशे चाध्याये, तेन संगच्छते इति बहूनां भक्तिमार्गीयाणां स्थापना सुविदितैव । एवं च हंसावतारस्य भक्तिमार्गेण संबंधः, तेन च श्रीनिम्बार्काचार्यस्य संबंध इत्याधृत्य तादृशो विश्वासः प्रासरत् ।

अस्यैव विश्वासस्य प्रमापकाणि भविष्यपुराणे उपलभ्यन्ते इति साधयद्भिर्विद्वद्भिराचार्यचरित्राणि यान्युपनिबद्धानि तेषु द्वापरान्ते युधिष्ठिर संवत्

६ ( षष्ठे वत्सरे ) कार्तिक-शुक्लपूर्णिमायां गोदावरी-तटे वैदूर्यपत्तने श्रीमदरुण-र्षेर्गृहे जयन्तीनाम्न्या भार्यायाः कुक्षेः श्रीनियमानन्दस्य जन्माभूदित्यादि वर्णितम् । श्रीनियमानन्देन कुत्रचन निम्बवृक्षे सूर्यस्य दर्शनं कारितमित्यस्य नाम निम्बार्क इति संजातमित्यपि तत्रोदलेखि । सर्वमिदं वृत्तं विद्वद्भिरेभिर्भविष्य-पुराणस्य प्रतिसर्गपर्वणः ( चतुर्थखंडस्य ) सप्तमेऽध्याये प्राप्यते तच्च विवरणं प्रमाणत्वेनोपन्यस्यते सर्वमिदं व्यपदिश्य श्रीमन्नारायणदेवाचार्य-सदृशैर्विद्वद्भि-राचार्यैः 'आचार्यचरित्र' प्रभृतीनि श्रीमदौदुम्बराचार्य-सदृशैर्विद्वद्भिश्च 'श्रीनिम्बार्कविक्रान्ति' प्रभृतानि चरित्रकाव्यान्युपन्यबध्यन्त । एषु च श्रीनिम्बार्काचार्यमारभ्याद्यावधि प्रवर्तमानाया आचार्यपरम्पराया अपि विवरणं समुपलभ्यते । अयमेव च सम्प्रदाय-पदस्य वास्तविकोऽर्थो यत् परंपरयाऽपरस्मै पुरुषायुषाय संप्रदीयते सा विद्या सा च साधना । भक्तिमार्गानुयायिनां कृते सैव च जीवातुभूतेति नाधिकं पल्लवितुमीहे यतो हि प्रकाश्यमानेऽस्मिन् ग्रन्थे तदेव चरित्रं विशदतयोपन्यस्तं सैद्धान्तिको विमर्शश्चाप्याचार्यपादैः कृतः ।

### स्थितिकाल-विवादः

अपरतश्च दर्शनशास्त्रेतिहास-विमर्शपराणां शोधविदुषामप्यूहापोहाः श्रीमन्निम्बार्काचार्यचरणानां जीवनं स्थितिकालं चोपलक्ष्य प्रचलन्ति । श्रीमन्निम्बार्काचार्यचरणा भक्तिमार्गस्य प्रमुखशाखाया एकस्याः प्रवर्तका इति तथ्यं तु सार्वजनीनत्वेन सर्वेषां मान्यमस्त्येव, ते भारतीसदर्शनस्य प्रखरा विवेचका युगपुरुषाश्चासन्नित्यपि विश्वजनीनत्वेन मान्यम् । वेदान्तस्य क्रान्त-दर्शिभिर्मनीषिभिरेभिर्बादरायणीयस्य ब्रह्मसूत्रस्य द्वैताद्वैतदृष्ट्या यद् व्याख्या-नमकारि तेन साधु प्रतिष्ठापितं वेदान्तविद्याया इतिहासेऽप्येषामप्रतिमं स्थानम्। तस्य चेतिहासस्यानुशीलकैरेषां वेदान्तपारिजातसौरभम्, वेदान्तकामधेनु-दशश्लोकी, श्रीप्रातःकृष्णस्तवराजः, 'मन्त्ररहस्यषोडशी', प्रपन्नकल्पवल्ली, श्रीराधाष्टकस्तवादयो ग्रन्था व्यमृश्यन्त समुदलेख्यन्त वा । तेषां च साक्ष्यं मीमांसमानैः शोधविद्वद्भिर्ये ऊहापोहाः समुदटंक्यन्त तेऽपि नूनं रुचिकराः ।

तैः सहास्माकं संमतिर्वा स्याद् विमतिर्वा स्यादिति तु कथान्तरं, किन्तु गजनिमीलिकया तानपरिज्ञाय प्रचलामश्चेदल्पज्ञताऽस्माकमेव व्यपदिश्येतेत्याशंक्य किंचन संकेतमात्रमस्यात्रोपह्रियते ।

एभिर्विद्वद्भिरपि सर्वा प्राचीना परम्परा मान्यता च प्रथमतः संकेतिताऽस्ति । डॉ० रा. गो. भांडारकरेण स्पष्टीकृतमस्ति यत्तेन दृष्टायां हरिगुरुस्तवमालायां सेयं परंपरोवर्णिता । तत्रोक्तं यत् हंसावतारो राधाकृष्णयोः संमिलितं किंचन तत्त्वमिति विश्वस्यते, स एव च निम्बार्कसंप्रदाये प्रथमो गुरुः । ततस्तच्छिष्यः कुमारोऽभूद्यश्चतुर्व्यूहस्वरूपः । तच्छिष्यो नारदः प्रेमलक्षणाया भक्तेः प्रवर्तकः । तच्छिष्यः सुदर्शनचक्रावतारः श्रीनिम्बार्काचार्यः। तच्छिष्यः श्रीनिवासः शंखावतारो मन्यते । तच्छिष्यो विश्वाचार्य इत्यादि परम्परामनुस्मृत्य हरिगुरुस्तवमालेयं श्रीहरिव्यासदेवाचार्यं द्वात्रिंशत्तममाचार्यं वक्ति । अन्या अपि परंपरासूच्यो वर्तन्ते यासामनुशीलनमेभिः शोधार्थिभिः कृतम् । अस्यां परंपरायां येषामर्वाचीनानां कालः सुपरिज्ञातः प्रमाणितश्च तेषां कालात् पूर्वमेकैकस्य पुरुषायुषस्य परिगणनां कुर्वाणैरेभिरनुमितं यत्कस्मिन् काले प्रथमाचार्यो भवेदाविर्भूतः । अनुमानप्रमाणं खलु सर्वैरेभिस्तर्कादिभिः संवलय्यानुसृतम् । इदमपि तैः सूचितं सदाद्याचार्याणां जन्मस्थली मूंगीपट्टन इत्यादि--शब्दैर्याभिधीयते साऽद्यत्वे कर्णाटकराज्यान्तर्गतबेलारिजनपदान्तर्भुक्ताऽस्ति । कतिपयैर्विद्वद्भिर्ग्रामस्यास्य नामैव 'निम्ब' ग्राम इति व्यपदिष्टं, तत्र जातो मार्तण्डोऽयमासीदतो निम्बार्क इत्यस्याभिधानमभूदित्यादि ते कथयन्ति । एवमेव स्थितिकालविषयेऽपि नैकमत्यं तादृशानां विदुषाम् ।

प्रथमतस्तु बहुभिः शोधार्थिभिरिदं साधितं यन्मध्वमुखमर्दनाख्यो ग्रन्थः श्रीनिम्बार्काचार्येण व्यलेखीति केषांश्चिन्मान्यता । ततश्चेदं तन्मते प्रमाणितं भवति यन्निम्बार्काचार्यो मध्वाचार्यादुत्तरं समुत्पन्नः ( यदि ग्रन्थोऽयं निम्बार्काचार्यस्यैवास्ति । ) श्रीमध्वाचार्येण तु स्वनिर्मिते महाभारततात्पर्यनिर्णयाख्ये ग्रन्थेस्वजन्मनो यद्वृत्तमुट्टंकितं तत् कलिसंवत् ४३०० इति वर्तते, यदनुसार-

मन्येषां प्रमाणानां चानुरोधेन द्वादश्याः ख्रिष्टीयशताब्द्या अन्तिमो....समायाति (११६७ई-१२७६ )। मध्वाचार्यास्तदनुसारं त्रयोदश्याः शताब्द्या पूर्वं नासन्नेव, अतो निम्बार्काचार्याणां स्थितिकालस्त्रयोदश्याः शताब्द्या अनन्तरमेवेति तेषां मतम्। अपरं च, श्रीदामोदर--गोस्वामिनो जीवनकाले विलिखितायां हरिगुरुस्तवमालायां वर्णितां गुरुपरम्परां विमृश्य प्रत्येकमाचार्यस्य समयं परिगणयन्तः ३२ आचार्याणां पूर्वं श्रीनिम्बार्काचार्यस्य समयमाकलयामश्चेत् स कालो द्वादश्यास्त्रयोदश्या वा शताब्द्याः पूर्वं न भवितुमर्हति। ततश्चैवंविधाः शोधविपश्चितः कालमिमं त्रयोदश्याः शताब्द्या उत्तरभागं, चतुर्दश्याः शताब्द्या मध्यभागं वा मन्यते। डॉ० राजेन्द्रलाल मित्राख्या दर्शनशोधविपश्चितस्तु श्रीवल्लभादप्यनन्तरं श्रीनिम्बार्काचार्याणां स्थितिकालं विवक्षवः सन्ति, किन्तु तदपरे न मन्यते, पुष्टप्रामाण्याभावात्।

बहुभिर्विद्वद्भिरिदमप्युद्गीर्णं यन्मध्वाचार्येण सर्वदर्शनसंग्रहाख्यो यो ग्रन्थो व्यलेखि यत्र च सर्वासां दर्शनशाखानां मतोल्लेखः संग्रहरूपेण विहितस्तत्र श्रीनिम्बार्काचार्याणां समुल्लेखस्तद्विवेचितस्य द्वैताद्वैतदर्शनस्य वा कश्चन सारसंग्रहो नोपलभ्यते। यदि श्रीनिम्बार्काचार्या मध्वाचार्येभ्यः पूर्वमभविष्यंस्तर्हि कश्चन संकेतस्तन्मतस्य 'सर्वदर्शन संग्रहे'ऽवश्यमभविष्यत्'। एवं हि बहवो विद्वांसश्चतुर्दश्यां शताब्द्यां श्रीनिम्बार्काचार्याणां स्थितिकालमामनन्ति। पं० किशोरदासाख्या विपश्चितस्तु श्रीअनन्तरामदेवाचार्यलिखिते जीवनवृत्ते श्रीनिम्बार्काचार्याणामनन्तरं गुरुपरम्परायां द्वादशं पीठाचार्यं संवत् १११२ अथवा १०५६ ई० वर्षे संजातं पठित्वा प्रत्येकमाचार्यस्य कालमष्टादशवर्षात्मकमनुमन्वाना नवम्यां शताब्द्यां तेषां स्थितिकालं कल्पयन्ति किन्तु तदपरे न मन्यते, यतस्तदनुसारं श्रीरामानुजानामपि पूर्वतरः श्रीनिम्बार्काणां स्थितिकालः समायाति, दर्शनशास्त्रेतिहास-लेखकाश्च श्रीरामानुजाचार्याणां परवर्तिन एव श्रीनिम्बार्क-मध्व-वल्लभाचार्यान् मन्यते। किन्तु सर्वाधिकसंख्या तेषां विदुषामस्ति ये श्रीनिम्बार्काचार्याणां स्थितिकालं ११६५ ई० त. आरभ्य चतुर्दशीं शताब्दीं यावत्कस्मिंश्चन समये निर्दिशन्ति। निम्बार्कमध्वयोः

स्थितिकालौ नातिव्यवहितावित्यपि मन्यन्तेऽधिसंख्यका विपश्चितः ।

इत्थं हि शोधविदुषां मीमांसानुसारं श्रीनिम्बार्काचार्याणां कालो द्वादशीं शताब्दीमारभ्य पंचदशीं यावत् कश्चन समय इति फतितार्थो निष्कृष्यते । तदनुसारमेव प्रायः सर्वैर्भारतीयदर्शनेतिहासकारैः श्रीरामानुज-निम्बार्क-मध्व-वल्लभाचार्याणां क्रमिकं पौर्वापर्यं निर्धारयद्भिरमीषां स्थितिकाला उट्टंकिताः । पारम्परिकास्तु न तन्मन्यते । तन्मते तु भविष्यपुराणस्य पूर्वसंकेतितं श्रीनियमानन्दजीवनवृत्तं प्रामाणिकमेव, तच्च न शोधविदुषामुपर्युद्धृतेन स्थितिकालेन संगच्छते । आधुनिकाः शोधविद्वांसस्तु भविष्यपुराणस्य समये समये प्रक्षिप्तानां श्लोकानां समावेशेन समुपबृंहितत्वात् यथावद् विश्वसनीयानि न मन्यते कालनिर्णयविषये । बहुभिर्विवेकिभिर्विद्वद्भिर्द्वयोरनयोः परस्पर--विपरीतयोर्मतयोः कस्मैचन समन्वयाय तादृशान् तर्कान् प्रमाणानि चाप्युपन्यस्य विमृष्टः श्रीनिम्बार्काचार्याणां स्थितिकालः, साधितं च यद् भविष्यपुराणस्य यानि प्रमाणानि समयनिर्धारणायोद्ध्रियन्ते तेषामपि निर्वचनं समन्वयविधया यदि क्रियते तर्हि द्वापरयुगस्याशयस्तन्मते विक्रमानन्तरं द्वादशशतं संवत्सराणां साधयितुं सुशकः । तदनन्तरमर्थात् द्वापरान्ते निम्बार्काचार्याः प्रादुरभूवन्निति भविष्यपुराणस्याशयः । तदनुसारं यद् वृत्तं समयश्च शोधविद्वद्भिरुल्लिख्यते तत्सर्वमपि संगच्छते, भविष्यपुराणस्यापि वृत्तमप्रामाणिकं न मन्तुं शक्यते । एवंविध एवैकः शोधलेखो राजस्थानीयानां सुप्रथितानां द्वैताद्वैतदर्शनमर्मज्ञानां, माघपुरस्कारसभाजितानां कविमूर्धन्यानां झुंझुनूजनपदान्तर्गत खेतडीनिकटवर्ति प्रपूर्णाग्रामवास्तव्यानां श्रीबदरीप्रसादशास्त्रिणामवलोकितो मया यत्र पौराणिकानां संदर्भाणाममीषां निर्वचनं सप्रमाणं तथा विहितं यथा तदाधुनिकैः शोधविदुषां मतैरपि संगच्छते । ( भगवान् श्रीनिम्बार्क के स्थितिकाल की समीक्षा इत्याख्यः शोधनिबन्धो वि० सं० २०५१ वर्षे प्रकाशितः ) अस्तु तावत् ।

प्रसङ्गप्राप्तं सर्वमिदं विमर्शजातं साम्प्रतिकाध्येतृणां बुद्धिविनोदाय समुद्धरतो ममैतावदेव हार्दं यदाधुनिकशिक्षादीक्षितानां शोधविदुषां विमर्शदृष्टिः

कथमस्माकं प्राचीनाचार्याणां मतानि, स्थितिकालादीनि चाध्येतुं प्रवर्तत इति नूनमाकलनीयमस्माभिरपि । मन्ये सर्वमिदमनुरुध्यैव श्रीजीमहाराजेन ग्रन्थ-परिशिष्टरूपेण श्रीनिम्बार्काचार्याणां विद्यमानकाल इति शीर्षकवहे प्रकरणेऽ-र्वाचां मतान्यपि संकेतितानि, तेषामनौचित्यं विवृण्वानानां विदुषां निबन्धा अपि निर्दिष्टा, ग्रन्था अपि सूचिता, येऽध्येतृभिरवश्यं द्रष्टव्याः । इत्थं हि व्यापक-सूचना-संग्रहविधया सर्वग्राहित्वमस्य चरितग्रन्थस्य संपादितं श्रीजी-महाराजैरिति विशेषोऽस्य परिशिष्टस्यापि । सर्वं तद् विमृश्य यथोचितं प्रमाणपुरःसरं यदस्माभिरुचितं मन्यते, तदस्माभिर्ग्राह्यमन्यत् त्याज्यमित्यत्र तु प्रमाणं सुधिय एव । न तत्र मामकीनः कश्चनाग्रहः ।

एतमेव बहुभिर्विद्वद्भिः श्रीनिम्बार्काचार्याणां पित्रोर्नामोल्लेखे जगन्नाथेति पितुर्नाम, सरस्वतीति मातुर्नाम समुट्टंकितं ( श्रीहरिव्यासदेवानां दशश्लोकी-ग्रन्थस्य टीकाया आधारेण ), बहुभिश्च पितुर्नाम अरुणमहर्षिरिति, मातुर्नाम च जयन्तीति ( पौराणिक--वाङ्मयस्य, चरित्रकाव्यानां चाधारेण ) ।

**सोऽयं चरित्रग्रन्थः**

विद्वद्वर-कवि-धौरेय-श्रीराधासर्वेश्वरशरण-देवाचार्यैरुपनिबद्धे श्रीनिम्बार्काचार्यचरितेऽस्मिन् परम्पराप्राप्तं श्रीनिम्बार्काचार्यजीवनाख्यानं प्रांजले संस्कृते सुरुचिरायां शैल्यामुपनिबद्धमिति द्रक्ष्यन्त्येव सुधियः । एतैर्हि भविष्यपुराणीयं, श्रीमदौदुम्बराचार्य रचित--श्रीनिम्बार्क--विक्रान्तिग्रन्थगतं च विषयमवलम्ब्य निम्बार्काचार्याणां समस्तं जीवनवृत्तं, वेदान्तविद्यासाधना, वाङ्मयसेवा, दार्शनिकमीमांसा चेत्यादि सर्वं सुष्ठु समुपन्यस्तं, ततश्च द्वैताद्वैत-सिद्धान्तस्य दार्शनिकः पक्षो विवेचितः, तदनु युगलोपासनायाः कतिपयानि तत्त्वानि विमृष्टानि ।अन्ते च यथापूर्वोक्तं श्रीमदाद्याचार्याणामाविर्भावकाल-संबंधी विमर्शः स्वमतं च स्पष्टीकृतं श्रीजीमहाराजैः । अत्रैवैतद्विषयिणी ग्रन्थसूच्यपि समुट्टंकिताऽस्ति ।

तदिदं तु प्रत्यक्षीकरिष्यत एव विपश्चिद्भिर्यदस्मिंश्चरितग्रन्थे श्रीजी-महाराजैः प्रांजला शैली, अलंकृता अभिव्यक्तिः, स्थाने स्थाने यथाऽऽवश्यकं कथोपकथनानि च प्रयुक्तानि, येन सर्वविधाः पाठकास्तमिममभिरोचयिष्यन्ति। विषयविमर्शस्थलेषु तैरुद्धरणानि प्रमाणानि च समुपन्यस्तानि । आद्याचार्याणां जीवनवृत्तेऽपि स्पष्टीकृतं यद्दक्षिणभारते मूंगीपट्टन इत्याख्ये नगरे तैर्जनिर्लब्धा किन्तु तेषां पितृचरणा अरुणमहर्षय उत्तरभारते समायाता, वृन्दावनं प्रणम्य मथुरापुरीं दृष्ट्वा प्रमुदितचित्ता अभूवन्, तत्सुतैर्नियमानन्दैश्च तत्रैव व्रजधाम्नि देवर्षेर्नारदाद् गोपालमंत्रराजस्य दीक्षाऽधिगता, तत्रैव च निम्बविटपेऽर्कस्य दर्शनं कारयित्वा निम्बार्केत्यभिधानमवाप्तम् । सर्वमिदमस्मादृशानां कृते ( येषां पूर्वजा एवमेव दक्षिण-भारतात् प्रोषिता उत्तरभारते वसतिं चक्रुः ) प्रमोदजनकं गौरवास्पदं च स्यादेवेति निसर्गतोऽहं प्रहृष्टमात्मानमनुभवामि ।

अलमतिविस्तरेण । 'न हि कस्तूरिकाऽऽमोदं शपथेन विभाव्यते' इति सूक्तिमनुरुध्य ग्रन्थस्यास्य विषये विवरणमात्रप्रस्तुतिचेष्टामकृत्वा, समग्रेऽस्मिन् कुलके के के सन्दर्भाः सन्तीत्यादेराम्रेडनाद् विरम्य, ग्रन्थस्य के के विशेषाः सन्तीत्यादेः पल्लवनं पुनरुक्तिं मन्वानः सुधियः पाठकाननुरुणध्मि यत्ते स्वयमेव वाचयित्वा ग्रन्थस्यास्य गुणागुणं परीक्षन्ताम् ग्रन्थस्यास्य प्रणयनोपलक्ष्ये श्रीजीमहाराजान् वर्धापयन्नाशासे यदयं श्रीनिम्बार्काचार्यपीठ-शिक्षासमित्या प्रकाशितस्य सुविपुलस्य ग्रन्थराशे-र्गौरवं समेधयिष्यति ।

अध्यक्षः
राजस्थान संस्कृत अकादमी
जयपुरम्

# सम्पादकीयम्

महान् प्रमोदस्यायं विषयो यद् अनन्तानन्त-ब्रह्माण्डाधिपतेः सर्वाधारस्य सर्वज्ञस्वरूपस्य सर्वनियन्तुः श्रीसर्वेश्वरप्रभोरहैतुकी कृपा एव कारणं भवितुं शक्नोति यया कृपया अनन्तश्रीविभूषितानां जगद्गुरूणां निम्बार्कपीठाधीश्वराणां श्री "श्रीजी" नाम्ना प्रख्यातयशसां प्रातःस्मरणीयानां साक्षाद् भगवद्स्वरूपभाजां श्रीराधासर्वेश्वरशरणदेवाचार्याणां पावनलेखिनीतः प्रसूतायाः "श्रीनिम्बार्कचरितम्" इति विश्रुतायाः रचनाया सम्पादनस्यावसरोऽनायास एव संप्राप्तः । मम मनसि यदा यदा भगवद्दर्शनस्येहा जायते, केनापिच्छलेन स्वत एव सलेमाबादस्य कार्यक्रमः सम्पद्यते, तत्र च तत्रभवतां भवतां साक्षाद्दर्शनेन सा पूर्तिमेति । नितान्तनिर्मलस्वान्तःकरणस्य विद्वद्धौरेयस्य भक्तानुकम्पिनो भक्तजनाह्लादकारिणः साक्षाद्दर्शनेन चरणारविन्दप्रणिपातेन च सर्वमपि हृद्गतं कालुष्यं नश्यति, आनन्दस्य प्राप्तिश्च जायते । मादृशा अकिञ्चनाः कलिमलाक्रान्ताः श्रीमतां सन्निधिं प्राप्य स्वात्मानं धन्यं मन्यमानाः प्रतीक्षमाणास्तिष्ठन्ति किमपि सम्पादयितुम् ।

प्रातःस्मरणीयानां महनीयचरितानां श्रीश्रीजी महाराजानां लोकार्पितेषु विरचितेषु ग्रन्थरत्नेषु विंशतितमोऽयं ग्रन्थः प्रकाश्यते । अतः पूर्वं ये ग्रन्थाः प्रकाशिताः तेषां विवरणमेवं समुपस्थापयितुं शक्यते--

१. श्रीनिम्बार्कभगवद्विरचितस्य प्रातःस्तवराजस्य "युग्मतत्त्वप्रकाशिका" नाम्नी संस्कृतव्याख्या
२. श्रीयुगलगगीतिशतकम् ( संस्कृत-पद्यात्मकम् )
३. उपदेशदर्शन ( हिन्द्याम् )
४. श्रीसर्वेश्वरसुधा-बिन्दु ( गेयपद्यानि )

५. श्रीस्तवरत्नाञ्जलिः ( संस्कृत-पद्यात्मकम् )
६. श्रीराधामाधवशतकम् ,,
७. श्रीनिकुञ्जसौरभम् ,,
८. भारत-भारती-वैभवम् ,,
९. श्रीयुगलस्तवविंशतिः ,,
१०. श्रीजानकीवल्लभस्तवः ,,
११. श्रीहनुमन्महिमाष्टकम् ,,
१२. श्रीनिम्बार्कगोपीजनवल्लभाष्टकम् ,,
१३. श्रीनिम्बार्कस्तवार्चनम् ,,
१४. नवनीतसुधा ( संस्कृत-गद्यात्मकम् )
१५. विवेकवल्ली ( हिन्दी-पद्यात्मकम् )
१६. हिन्दूसंघटन ,,
१७. भारतकल्पतरु ,,
१८. श्रीसर्वेश्वरशतकम् ( संस्कृत-पद्यात्मकम् )
१९. श्रीराधाशतकम् ( संस्कृत-पद्यात्मकम् )
२०. श्रीनिम्बार्कचरितम् ( संस्कृत-गद्यात्मकम् )
२१. श्रीवृन्दावनसौरभम् ( संस्कृत-पद्यात्मकम् )
२२. श्रीराधासर्वेश्वर मंजरी ( गेय-पद्यानि )
२३. श्रीमाधवप्रपन्नाष्टकम् ( संस्कृत-हिन्दी-पद्यात्मकम् )
२४. छात्र-विवेक-दर्शन ( हिन्दी-पद्यात्मकम् )
२५. भारत-वीर-गौरव ( हिन्दी-पद्यात्मकम् )
२६. श्रीराधासर्वेश्वरालोकः ( संस्कृत-हिन्दी-पद्यात्मकम् )
२७. श्रीपरशुराम-स्तवावली ( संस्कृत-हिन्दी-पद्यात्मकम् )
२८. श्रीराधा-राधना ( संस्कृत-हिन्दी-पद्यात्मकम् )
२९. मन्त्रराजभावार्थ-दीपिका ( संस्कृत-पद्यात्मकम् )
३०. श्रीराधामाधवरसविलास ( हिन्दी-महाकाव्य )

३१. श्रीगोशतकम् ( संस्कृत-पद्यात्मकम् )
३२. श्रीसीतारामस्तवादर्शः ( संस्कृत-हिन्दी-पद्यात्मकम् )

समेषामेषां रचनानामध्ययेन प्रमाणीभवति यदिमे द्वैताद्वैत-वेदान्त-दर्शनस्य प्रमुखान् सिद्धान्तान् लक्ष्यीकृत्य सर्वेश्वरप्रभुं सुदर्शनावतारं भगवन्तं श्रीनिम्बार्कमहामुनीन्द्रं च सर्वतोभावेन भजन्ति । स्वेष्टदेवस्य राधा-माधवयुगलस्वरूपस्य मनोहारिस्वरूपं हृदि स्वान्तःकरणे वा निधाय भक्तिभाव-भरिताः समाराधनतत्पराः एकान्ततस्तेषामेव गुणगणान् प्रकटयन्तोऽहर्निशं सेवमानाः विराजन्ते, समुपस्थितान् भक्तगणांश्च भगवतश्चरितवर्णनेन भक्ति-रसाब्धौ निमज्जयन्ति । षट्सप्ततिवर्षदेशीयाः गौड़विप्रकुलावतंसाः श्रीरामनाथ-गौडात्मजाः मातुःश्रीस्वर्णलतादेव्याः लब्धजन्मानः सलेमाबादस्था एव अनन्तश्रीविभूषितानां जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वरचराणां श्रीजी श्रीबालकृष्णशरणदेवाचार्याणामुत्तराधिकारिणः आचार्यपरम्परायां लेखनादिकर्मपाटवेन सर्वेषामेव सम्मान्याः श्रद्धास्पदा विद्यन्ते ।

प्रस्तुतामिमां रचनामभिलक्ष्य किं निवेदये । महनीयचरितानां चरित-वर्णनेन श्रवणेन, निदिध्यासितेन वा महती समुपलब्धिर्जायते, सा त्ववर्णनीया एव भवति, किमुत सर्वज्ञांशावताराणां कर्तुमकर्तुमन्यथाकर्तुं प्रभविष्यतां साक्षाद् भगवत्स्वरूपाणां चरितवर्णनेन । नात्र संशीतिलेशावकाशो, यदस्मिन् चरितवर्णनप्रधाने गद्यकाव्ये आप्तवाक्यप्रामाण्यात् सुदर्शनावतारस्वरूपाणां महामुनीन्द्र श्रीनिम्बार्काचार्यदेवानामैतिह्यं व्यक्तीकृतम् । तदपि पीठाधी-श्वराणां आचार्यचरणानां स्वान्तःस्फुरितविचारस्य परिणमनम् । सर्वजन-बोधगम्यया शैल्या सरलया भाषया प्रस्तुतमिदं चरितप्रधानं गद्य-काव्यं सर्वेभ्यः प्रेरणाप्रदं भवितेति विश्वसिमि ।

अस्यां महनीयायां रचनायां द्वैताद्वैत-सम्प्रदायानुकूलं यत्किमपि मननीयं पठनीयं चिन्तनीयं वा वस्तुजातं तदप्यत्र हस्तामलकवत् स्फुटीकृतमिति

धन्याः वयम् । सर्वजनावबोधाय चान्ते संस्कृतभाषयामुपनिबद्धस्य सम्पूर्ण-विषयस्य हिन्द्यामनुवादः प्रस्तुत इति महत्सौभाग्यमस्मदादीनाम् । एतदर्थं पण्डितवरेण्याः श्रीदयाशङ्कर शास्त्रिणः साधुवादैरभिनन्द्यन्ते । राजस्थान संस्कृत सङ्गमस्य विदुषामध्यक्षमहोदयानां प्रकाशकीयवक्तव्येन संवलितं निम्बार्कचरितं सर्वेषां कल्याणाय स्वान्तः सुखाय च भविष्यतीति मङ्गलं कामयमानोऽहं स्वात्मानं धन्यं मन्ये ।

श्रीश्रीजीचरणचञ्चरीकः
**डॉ. प्रभाकरः शास्त्री**
राजस्थान संस्कृत अकादमी-निदेशकः
जयपुरम्

श्रीसर्वेश्वरो जयति
॥ श्रीमते निम्बार्कमहामुनीन्द्राय नमः ॥

# अभिनवरमणीया कृतिः

**नक्तन्दिवं श्रुतिपथोन्नमनप्रवृत्तान् सर्वेश्वरप्रभुपदाब्जनिलीनचित्तान् ।**
**'श्रीजी' पद-प्रथितनिर्मलसच्चरित्राञ्छ्रीमज्जगद्गुरुवरान् हृदि भावयामि ॥**

अखिलभारतीयजगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वरैरनवरततपः-स्वाध्याय-तत्परैः सकलशास्त्रनिष्कर्षभूतद्वैताद्वैतसिद्धान्तसमुज्जृम्भणनिरतैः श्रीधाम-वृन्दावनस्थ-निभृतनिकुञ्जलीलानिलीयमानमानसैर्विरचित-बहुविधमहार्घसुर-भारती-प्रबन्धं जगद्गुरु-निम्बार्काचार्य श्रीराधासर्वेश्वर-शरणदेवाचार्यैः 'श्रीश्रीजी-महाराजै-र्निर्मिता निम्बार्कचरिता-भिधानामभिनवां रमणीयां कृतिं निभाल्य नितरां मोमुद्यमानमस्मदीयं मनः । शब्दशास्त्रानुमोदितैः सुव्याकृतैर्ललितललितैर्मधुरमधुरैः प्रतिसन्दर्भं गभीरार्थप्रदायिभिः पदोच्चयैर्गुम्फिता कृतिरियं द्वैताद्वैतसिद्धान्तप्रवर्तकस्य सुदर्शनावतारस्य भाष्यकर्तुराद्यजगद्गुरोर्भगवतो निम्बार्कमहामुनीन्द्रस्य विश्वमङ्गलं निःशेषजीवनचरितं जनसदसि प्रकाश्य श्रीराधाकृष्ण-युगलोपासनाया असाधारणीं माधुरीं च लोकजीवने समुद्धार्याध्यात्मिकसाधनापथिकानां कृते महत्युपकारिणी सेत्स्यतीति दृढं विश्वसित्यास्माकीनं मनः ।

'गद्यं कवीनां निकषं वदन्ति' इति कविपरम्पराया भणितिमिमामन्वर्थयितुं विविध-रसगुणालङ्कारादिभिर्मण्डितेयं रचनां नूनं निकषायमाणा भवेदिति संभावयामि। यादृशं जगत्पावनं विषयवस्तु तदनुकूलैव च शब्दगुम्फनपाटवी कृत्यानया समधिगतेति नूनं स्वर्ण-सुगन्ध-सङ्गम एव सङ्घटनोऽत्र दृष्टिपथमवतरति । अतो रचनेयं सहृदयहृदय-हारितां दधती भगवन्निम्बार्काचार्यप्रतिष्ठापितां माधुर्योपासनां विशदी कर्तुमनन्यसाधा-रणीं विशेषतामधि-गमिष्यतीत्यत्र नास्ति सन्देहदोलारोहणावसरः । महिममण्डिता कृतिरियं स्वलक्ष्यानुसारं साफल्यशिखरमधिरोहतु साधयतु च सहृदयहृदयानामावर्जन-मिति समीहमानो बहुमूल्यां रचनामिमां प्रस्तुत्य विहितलोकहितेभ्यः श्रीजीमहाराजेभ्यः वर्धापनं विनिवेदयामि ।

श्रीचरणानां विधेयः
**खेमराज केशवशरणः**
काष्ठमण्डपः, नेपालः

श्रीसर्वेश्वरो जयति

# गभीरभावभरितं श्रीनिम्बार्कचरितम्

प्रातःस्मरणीयानन्तश्रीविभूषितानां परमोदारसर्गाणामखिल-जगद्-गुरूणां विपुलगीर्वाणगीर्वाङ्मयाध्ययनानुशीलनाधिगत-प्रखर-वैदुष्याणां सलेमाबादपीठाधिष्ठितानां वर्तमाननिम्बार्काचार्यपीठाधिपतीनां श्रीराधासर्वेश्वरशरणदेवाचार्याणां कुशेशयेशययुगलविगुम्फितं निखिल-चराचरजगन्नियन्तुः सर्वेश्वरभगवतः श्रीकृष्णस्य सुदर्शनचक्रायुधावतारस्वरूपिणः श्री-भगवन्निम्बार्कमहामुनीन्द्रस्य श्रीमद्भगवद्भक्तिगभीरभावभरितं जीवनचरितं लोकं लोकं श्रीनिम्बार्कचरितमिदमदभ्रहर्षभृन्मे मनोऽमोमुद्यत ।

अनेन दिव्यभगवन्निम्बार्काचार्यचरितेन भावुकभक्तजनानां श्रेयसः सम्पद्यतामनवरतमिति कामयते ।

आचार्यचरणाब्जचञ्चरीकः

**निम्बार्कभूषण सत्यनारायणः**

अजयमेरुः

श्रीसर्वेश्वरो जयति

श्रीभगवन्निम्बार्काचार्याय नमः

# श्रीनिम्बार्कचरित-वैशिष्ट्य

अनन्तश्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर श्री श्रीजी महाराज द्वारा विरचित एवं प्रकाशित ग्रन्थमाला में 'श्रीनिम्बार्कचरित' नामक गद्यकाव्य महत्वपूर्ण पुष्प के रूप में गुम्फित हुआ है । यह काव्य वैदर्भी रीति, प्रसाद गुण, अनुप्रासोपमादि अलंकारों से अलंकृत है । शान्तरस एवं भक्तिभाव से परिपूर्ण इस काव्य में सुदर्शनचक्रावतार श्रीभगवन्निम्बार्काचार्य के जीवनवृत्त का अवतरणोपक्रम से लेकर बालचरित, शिक्षा, दीक्षा, व्रजगमन, तपश्चर्या, निम्बार्काभिधान, तीर्थयात्रा, विविधलीला प्रसङ्ग तथा भाष्यादि ग्रन्थ रचनाओं के साथ साङ्गोपाङ्ग अनुपम वर्णन किया गया है ।

तत्कालीन ऋषि-महर्षियों के आश्रमों का मनोहर सजीव चित्रण बरबस चित्त का आकर्षण करता है । पिता महर्षि अरुण का आदर्शमय अनुशासन एवं माता जयन्ती के वात्सल्य का जो अलौकिक उत्कर्ष और माधुर्य प्रस्तुत काव्य में देखने को मिलता है, वह अन्यत्र दुर्लभ है । यह अभिनव गद्य काव्य समस्त विशेषताओं को अपने मे समेटे हुए शब्दसौष्ठव की दृष्टि से महाकवि श्रीअम्बिकादत्तजी व्यास द्वारा रचित 'शिवराज-विजय' की झलक प्रदर्शित करता है । इसमें न केवल चरित का ही वर्णन है, अपितु रसमयी उपासना, दार्शनिक सिद्धान्त का भी समावेश है । अतः 'श्रीनिम्बार्कचरितम्' लघुकलेवर होते हुए भी सारबाहुल्य से भरा हुआ है, जिसके अध्ययन, मनन, चिन्तन से वेदान्त दर्शन के जिज्ञासुजनों की जिज्ञासा का समाधान स्वतः हो जायेगा ।

पूज्य आचार्यश्री ने अपनी सतत-साहित्य-साधना द्वारा दिव्यानन्दोपलब्धि के लिए सुगम स्वाध्याय व भक्तिमार्ग बताने का जो अहैतुक अनुग्रह किया है यह समस्त श्रद्धालुजनों का परम सौभाग्य है । अतः इस चरितप्रधान काव्य का पठन-मनन कर अपना जीवन सफल बनावें, ऐसी प्रार्थना है ।

विनीत

**वासुदेवशरण उपाध्याय निम्बार्कभूषण**

**प्राचार्य, श्रीसर्वेश्वर संस्कृत महाविद्यालय**

अ. भा. श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ-सलेमाबाद

जि. अजमेर ( राजस्थान )

# चरितोदयेन श्रीनिम्बार्कस्य पुनरुदयः

अनन्तश्रीविभूषितैर्जगद्गुरुश्रीनिम्बार्काचार्यपीठाधीश्वरैः श्री ''श्रीजी''महाराजश्रीराधासर्वेश्वरशरणदेवाचार्यवर्यैर्धर्मकार्येऽतिव्यस्तैरस्वस्थैरपि कियन्त एव भारतभारती महत्वाधायकाः भक्तिरसमयाः श्रीराधाकृष्णोपासन-सरणिविधायका ग्रन्था विरचिताः प्रकाशिताश्च । परमधुना श्रीनिम्बार्कचरित-रचनया परमप्राचीनानामाद्याचार्यचरणां पुनरुदयः प्रतिभाति । अनया सरस-रचनया सम्प्रदायजगदुपकृतमस्ति । श्रीनिम्बार्काचार्याणां पुनरुदय इव चरितो-दयेन कारितः । एतस्याध्ययनेन श्रीनिम्बार्काचार्याणां समस्तजीवनस्य सिद्धान्तस्य उपासनापद्धतेश्च समग्रं ज्ञानं सेत्स्यतीति मे द्रढीयान् विश्वासः ।

आचार्यचरणकमलचंचरीकः-
**हरिशरणउपाध्यायो 'निम्बार्कभूषणः'**
व्या० वेदान्ताचार्यः (काठमाण्डू-नेपाल)
पूर्वप्राचार्यः-
श्रीनिम्बार्कसंस्कृतमहाविद्यालय-वृन्दावनस्य

# श्रीनिम्बार्कचरितगौरवम्

अनन्तश्रीविभूषिताखिल-जगद्गुरुश्रीनिम्बार्काचार्य-श्रीराधासर्वेश्वर-शरणदेवाचार्यश्री ''श्रीजी'' महाराज-विरचितं ''श्रीनिम्बार्कचरितं'' समवलोक्य मोमुद्यते चेतो नरीनृत्यते मनोमयूरः ।

वस्तुतः श्रीमन्तः कविप्रवराः, यथा पद्ये तथैव गद्येऽपि सिद्धाः सन्ति।

श्रीनिम्बार्कचरिते भाषाया लालित्यं, भावानां गाम्भीर्यं नानालङ्काराणां दर्शनं च वलादाकर्षयन्ति विलक्षण-विचक्षणानां मनांसि ।

क्वचिदम्बिकादतव्यासगद्यच्छटा, क्वचिद् - बाण - विरचित - कादम्बर्या रमणीयता क्वचिदुदात्त-दण्डिनः पद-लालित्यं क्वचिद्-हर्षचरितै-तिह्यवैभवपूर्णं - जगद्गुरुश्रीनिम्बार्कचरितनिरूपणं भव्य-नव्य-गद्योत्कर्षं-प्रकटयति ।

दण्डप्रियकचखण्डग्रथितशिखण्डानां, व्रजशशिखण्डानां, स्फुरण-सपिण्डानां द्विजपतितुण्डानां, प्रणयकरण्डानां, प्रथितपिचण्डस्थित-जगदण्डानां श्रीनन्दनन्दनवृन्दावनाधीश्वराणांचरणकमलेषु भूयोभूयः प्रार्थनं यदिमे गुरुचरणाः स्वकीयेनामृतोपमेन गद्येन पुनरपिसंस्कृतजगतो गौरवं वर्द्धयिष्यन्ति किमधिकम् ।

**राजस्थानधरामणिं वुधवरं वेदान्तविद्यानिधिं**
**श्रीसर्वेश्वरपादपद्मरसिकं विद्यार्थिकल्पद्रुमम् ।**
**द्वैताद्वैतमताब्जभास्करनिभं ''श्रीजी'' पदैर्विश्रुतं**
**वन्दे वेदविभाकरं गुरुवरं निम्बार्कतीर्थस्थितम् ॥**

श्रीमच्चरणनलिनचञ्चरीकः-

**निम्बार्कभूषण-डा. वासुदेवकृष्णचतुर्वेदः लब्धस्वर्णपदक-सप्ताचार्यः**

पूर्व-संस्कृतविभागाध्यक्षः एम. ए. (सं० हि०) पी. एच. डी.-डी. लिट्

प्राच्यदर्शनविद्यालयवृन्दावनस्य ( मथुरा-उत्तरप्रदेशः )

# स्वीय - हार्दिकोद्भावः

यद्यपि श्रीहरिप्रियायुध-श्रीसुदर्शनचक्रावताराणां भगवतां श्रीम-**न्निम्बार्काचार्य**पादानां जगद्गुरूणां विपुलं परमपावनतमं दिव्यचरितं समुपलभ्यते, तथाप्यत्राऽतिसंक्षेपेणैव समेषां श्रीभगवद्भक्तिपरायणानां भावुकभक्तानामैतिह्यविदां प्रेक्षावज्जिज्ञासूनाञ्च कृते परमहितार्थं गीर्वाणवाणीमाश्रित्य सरलगद्यात्मकं **'श्रीनिम्बार्कचरित'**मुपनिबद्धमस्माभिः । तत्र श्रीभगवन्निम्बार्काचार्यचरणाम्बुजशिष्यप्रवर-परमर्षि-श्रीमदौदुम्बराचार्यविरचित **'श्रीनिम्बार्कविक्रान्तिः'** तथा भविष्यपुराणोक्त **'श्रीनिम्बार्कजन्मकथा'** प्रभृतिविभिन्नपरमपुरातनप्रामाणिकैतिहासिकसद्ग्रन्थेभ्यश्च संकलय्याऽस्मिन्प्रस्तुतलघुकलेवरात्मके ग्रन्थे सर्वेश्वरश्रीराधामाधवप्रेरणया श्रीभगवन्निम्बार्कपदाम्बुजाऽनुकम्पया च यथामति परिवर्णितम् ।

भारतवर्षधराधाम्नि तत्राऽपि च दक्षिणाञ्चले **वैदूर्य्यपत्तन** (मूंगी-पैठण) ग्रामसमीपवर्ति-गोदावरीतटे महर्षिवर्य**श्रीमदरुणाश्रमे जयन्तीमातृ**-कुक्षेः समवतीर्य दक्षिणभारतदेशाच्चोत्तरभारताञ्चले परात्परसपरब्रह्म सर्वेश्वरश्रीराधाकृष्णयुगलपदकमलनित्यलीलाविलाससमवतरण-सच्चिन्मयपरमरम्यदिव्यावनौ श्रीव्रजधाम्नि तत्राप्यतिशयरमणीयश्रीगिरिराज-गोवर्धनपर्वतोपत्यकासविधस्थाऽतिकमनीये सुरम्यस्थले द्वापरयुगान्ते कलियुगारम्भकाले च समुपागत्य सुदीर्घकालपर्यन्तं तत्र तपश्चक्रुराद्याचार्यवर्य-श्रीभगव**न्निम्बार्काचार्यपादाः** । यत्र तपोभूमौ श्रीमदामाद्याचार्यश्रीनिम्बार्क-भगवता बहुकालावधि-श्रीसर्वेश्वरसेवापुरस्सरं श्रीवृन्दावननिकुञ्जविहारि-नित्यनवयुगलकिशोरश्रीराधाकृष्णपदकञ्जयुगलाऽऽराधनं सम्पादितं, तदेव दिव्यस्थलं **निम्बग्रामा**ऽभिधया प्रसिद्धिमवाप्तम् । तत्रैव निम्बग्रामे, (नीमगांव) इति लोकभाषायां प्रख्यातस्थले स्वाश्रमे तपःस्थलेऽवस्थाय प्रस्थानत्रयीमधिकृत्य तदुपरि वेदान्तभाष्यादिकान्विविधग्रन्थान्विरचय्य

स्वाभाविकद्वैताद्वैतराद्धान्तस्य श्रीराधाकृष्णभगवतो निकुञ्जरसोपासनाया अनादिवैदिकसनातनवैष्णवधर्मस्य च श्रीसनकादिमहर्षिसंसेवित-श्रीसर्वेश्वर-प्रभुसेवां समनुतिष्ठन्तः श्रीमदाचार्यवर्याः प्रचुरं प्रचारं विहितवन्तः ।

प्रस्तुते 'श्रीनिम्बार्कचरित-ग्रन्थेऽस्मिन्सनकादिमहर्षिसंसेवित-श्रीसर्वेश्वरप्रभोस्तथा श्रीसर्वेश्वरभगवतः श्रीकृष्णस्य नित्यदिव्यपार्षदानां तदनुग्रह-विग्रहमङ्गलस्वरूपाणां श्रीभगवन्निम्बार्काचार्यचरणानां सुपावनतमं परममङ्गल-मयं दिव्यचरितमुपबृंहितमस्ति । यद्यपि चरितग्रन्थस्याऽस्य विस्तृतविवेचनस्य समीहाऽऽसीत्स्वकीये स्वान्ते, परं सम्प्रत्यस्मदीयं स्वास्थ्यमपि प्रतिकूलमेव। दशवर्षात्प्रागेकपञ्चाशदुत्तरद्विसहस्रतमे (वि.सं. २०५१)वैक्रमेऽब्दे यदस्मदीयो-दरेऽश्मरीभ्रान्त्याऽऽधुनिकचिकित्साविधिना चिकित्सकेन या विस्तृता शल्य-क्रिया सम्पादिता, तज्जन्या वेदनाऽधुनाऽपि प्रभूतं क्लेशं जनयति, सुतरां तावल्लेखने प्रवचने प्रगमने चैकासनासीने वा भूयसी बाधा समुत्पद्यते । इह जन्मनो जन्मान्तरीयस्य वा सञ्चितकर्मविपाकजन्यो व्याधिरयं नितरामन्तरायं विदधाति । यत्किमपि भवतु नाम सर्वनियन्तुः सर्वद्रष्टुर्भगवतः श्रीसर्वेश्वरस्य श्रीराधामाधवप्रभोः परमकरुणावरुणालयानां श्रीमन्निम्बार्कभगवतामस्मच्छ्री-गुरुदेवचरणपङ्कजानाञ्च दिव्यानुकम्पाप्रसादात्सर्वं शं स्यादित्यस्मद्द्रढीया-न्प्रत्ययः ।

एवञ्च राजस्थानसंस्कृत-अकादमी-जयपुरस्थ निवर्तमाना निदेशक-वर्या श्रीप्रभाकरशास्त्रिमहाभागास्तथाचाऽकादमीविभागाध्यक्षाः परम-सम्मानास्पदाः विद्वद्धौरेयाः **श्रीकलानाथशास्त्रि**महाभागा अपि प्रस्तुतग्रन्थस्य भूमिकाऽऽलेखने यन्निजममूल्यसमयं प्राददुस्तन्नितान्तं परमं महीयः । तत्र खलु डा० श्रीप्रभाकरशास्त्रिमहाभागैरस्य ग्रन्थस्य सुभगसम्पादने यो भूयान्समयः समर्पितस्तन्नितान्तो गरीयान्, तथाऽस्माभिः सम्प्रेरिताः पं० श्रीदयाशङ्कर-शास्त्रिवर्य्याश्चरितस्यास्य हिन्दीभाषया सरलार्थं विहितवन्तश्तेषां सत्प्रयासोऽयं परमस्पृहणीयोऽस्ति । इतरे च ये विपश्चिद्वरेण्याः प्रस्तुतग्रन्थविषयक-

स्वीयाभिमतविलेखनग्रन्थमुद्रणसंशोधनादिसत्कार्येषु संलग्ना आसंस्तेऽपि परमसाधुवादार्हाः । समेषां कृते श्रीसर्वेश्वरप्रभोर्नितरां मङ्गलं कामयामहे ।

अन्ते च समेषां समक्षे सम्प्रस्तुत 'श्रीनिम्बार्कचरित' ग्रन्थेन यदि श्रीमदाद्याचार्यवर्यश्रीभगवन्निम्बार्काचार्यचरणसरोरुहभक्तिनिरतानां भगवद्रसिकभक्तमहानुभावानां विविधविद्याविद्योतितान्तःकरणानां प्रेक्षावतां तथा चाऽन्तेवासिनामपि कृते यःकोऽपि लाभः सुलभश्चेत्तहर्य-स्मत्कृतस्वल्पतमः प्रयासोऽपि सार्थकः स्यादित्यास्माकीनो हार्दिको भावः । अन्ते च वयं पौनःपुन्येन भगवन्तं श्रीसर्वेश्वरं श्रीमन्निम्बार्कपदाम्भोजञ्च नितरां स्मारं स्मारं स्वीयलेखनीं विरमयामः ।

मितिः-कार्तिक शुक्ल पूर्णिमा शुक्रवासरः
श्रीनिम्बार्क जयन्ती महोत्सवः
वि० सं० २०६१
दिनाङ्काः २६/११/२००४

-श्रीराधासर्वेश्वरशरणदेवाचार्यः

* श्रीसर्वेश्वरो जयति *

॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

अनन्तश्रीविभूषितजगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर

*श्रीराधासर्वेश्वरशरणदेवाचार्य श्री "श्रीजी" महाराज*

विरचितम्

# श्रीनिम्बार्कचरितम्

**निम्बार्कचरितं दिव्यं प्रपन्नाऽऽर्तिनिवारकम् ।**
**शास्त्रप्रख्यापितं राधा-कृष्णाऽङ्घ्रिभक्तिसम्प्रदम् ।।१।।**
**निर्जरभाषयाऽऽबद्धं निम्बार्काचार्यवैभवम् ।**
**सर्वार्थसिद्धिदं चारु चास्ति युग्मरसप्रदम् ।।२।।**
**सर्वेश्वरञ्च निम्बार्कमाद्याचार्यं जगद्गुरुम् ।**
**संस्मृत्याऽऽरभ्यते ग्रन्थो निम्बार्क-चरिताऽश्रितः ।।३।।**
**ध्यात्वा गुरोः पदाम्भोजं कलिकल्मषसंहरम् ।**
**तन्यतेऽधिगतं यच्च लघुगद्यात्मकं मया ।।४।।**

यह दिव्य "निम्बार्क चरित" शरणागत भक्तों के कष्टों का निवारक, शास्त्रों में वर्णित एवं श्रीराधाकृष्णचरण कमलों की भक्ति प्रदान करने वाला है ।।१।। देव भाषा (संस्कृत) में लिखित यह "निम्बार्काचार्य-चरित" वैभव एवं सर्वार्थसिद्धि प्रदान करने वाला तथा श्रीराधामाधव की रसमयी भक्ति प्रदान करने वाला है ।।२।। भगवान् श्रीसर्वेश्वर प्रभु एवं आद्याचार्य जगद्गुरु श्रीनिम्बार्क भगवान् का शुभ स्मरण करके यह परम पावन "निम्बार्कचरित" ग्रन्थ आरम्भ किया जाता है ।।३।। श्रीगुरुवर चरणकमलों का ध्यान करके कलियुग के कल्मष का संहार करने वाला गद्यात्मक यह लघु ग्रन्थ, जैसा हमने अवगत किया, लिखते हैं ।।४।।

अहो कियती कमनीयता दरीदृश्यते परितो भारतवर्षं यत्तस्य परमरम्यपावनवसुन्धरायां समुल्लसितानां परमदिव्यचारुतमानामृषीश्वर-पवित्राऽऽश्रमाणाम् । यत्र सुप्रभातवेलाायाञ्च ऋषयो मुनयो योगि-यति-तपस्वि-साधवो यज्ञानुष्ठानमाचरन्ति । शास्त्रस्वाध्यायपरमपटवोब्रह्म-चारि-वटवश्च सस्वरवेदमन्त्रान् समुच्चारयन्ति । विविधविहगकुलकल-रवोऽपि विचित्राऽऽनन्दं जनयति । गोवृन्दहम्बारवो विलक्षणसुखं प्रकटयति । दधिमन्थनघोषश्च सर्वान्समाकर्षति । द्राक्षाऽऽम्र-कदम्ब-निम्ब-जम्बू-जम्बीर-बदरी-वकुल-बिल्व-वट-पिप्पल-दाडिम-नारङ्गी-तूद-कदल्यादितरवो वल्लयश्च स्वकीयानि सुपरिपक्वानि परममधुराणि फलानि प्रददति । मालती- केतकी-पाटली-चम्पा-कुन्द-यूथिका-मल्लिका-वासन्ती-शेफालिकादि-विविधव्रतति-सुमनस्सुरभिस्तु परितः परिव्याप्ताऽस्ति । रक्तोत्पलयुताः पवित्रा-ऽच्छवारिभरिताः सुभगसरोवराः स्वकीयपावनतां प्रदर्शयन्ति । पर्वत-निर्झरप्रपाताः कल-कलनिनादेन सर्वतोदिगन्तरालमुपरिष्टान्निपतन्तः शब्दायमानं विदधति । पुण्यसलिलाः सरितोगभीरधाराप्रवाहेण प्रवहन्त्यो नितरां निखिलदर्शकमानसमानन्दयन्ति । गिरिनिकराः श्रोतृरूपे-णाऽवस्थिता दरीदृश्यन्ते । मृगाश्च स्वच्छन्दमरण्यप्रदेशं समलङ्कुर्वन्ति । शुभ्रवर्णाः शशकाश्च सोल्लासं निरातङ्कमितस्ततो धावन्तोऽतिमृदुलान्दूर्वा-ङ्कुरान् समास्वादयन्तो विचरन्ति । मृगेन्द्र-व्याघ्र-भल्लूक-वराह-जम्बूक-वृक-विडालादि-हिंस्रक-पशुविशेषा हिंसां विहाय परमशान्त-सात्त्विकरूपेण समवतिष्ठन्ते । शाखामृगास्तु द्रुमाद्-द्रुमोपरि प्रकूर्दमानाः परितः पलायमाना मिथो विक्रीडन्ति । सर्पा विसर्पन्तः समेषां मङ्गलं कामयन्ते । वृश्चिकादिविषवन्तो जन्तवो विषमपहाय भ्रमन्ति । वस्तुत एतेषां परमसात्त्विकदिव्याश्रमाणामतीववैलक्षण्यं परिलक्ष्यते, यतोहि नानाविध-कुसुमसौरभ-सुरभितस्त्रिविधः समीरः प्रवहति । केचन शास्त्रविहित-सङ्गीतमर्मज्ञा वंशी-विपञ्ची-मृदङ्ग-मञ्जीरादिविविध-

**मङ्गलवाद्यैर्भगवन्नामसंकीर्तनसंलग्नाः सन्ति । केचन मनीषिणः परस्परं ब्रह्म-जीव-जगद्विषयकवेदान्तदर्शनचर्चां प्रकुर्वन्तः प्रमुदितमनस्का विजायन्ते ।**

अहो ! भारतवर्ष की अति सुन्दर परम पावन धरा पर शोभायमान दिव्यातिदिव्य भव्य महर्षियों के पवित्र आश्रमों की चारों दिशाओं की और सर्वत्र कितनी सुन्दरता दिखाई देती है । जहाँ पर पुण्य प्रभात वेला में ऋषि, मुनि, योगी, यति, तपस्वी, साधु यज्ञानुष्ठान का आचरण करते हैं । सन्ध्या समय में अतिचतुर ब्रह्मचारी वटुक सस्वर वेद मन्त्रों का समुच्चारण करते हैं । अनेक प्रकार से पक्षीकुल का कलरव भी विचित्र आनन्द अनुभव कराता है। गोमाताओं के रंभाने का मङ्गलमय शब्द विलक्षण आनन्द को प्रकट करता है और दधि-मन्थन का घोष सबको आकर्षित करता है । द्राक्षा, (अंगूर), आम्र (आम), कदम्ब, निम्ब (नीम), जम्बू (जामुन), जम्बीर (निम्बू), बेर, वकुल, बिल्व, पिप्पल, दाड़िम (अनार), नारङ्गी, तूद (शहतूत), कदली आदि वृक्ष एवं लताएँ अपने सुपरिपक्व और मधुर फल प्रदान करते हैं । मालती, केतकी (केवड़ा), गुलाब, चम्पा, कुन्द, यूथिका (जूही) मल्लिका (मोगरा), वासन्ती एवं शेफालिका आदि अनेक प्रकार की लताओं के पुष्पों की सुगन्धि तो चारों ओर व्याप्त है । लाल कमल युक्त पवित्र एवं स्वच्छ जल से परिपूर्ण सुन्दर सरोवर स्वकीय पवित्रता को प्रदर्शित करते हैं । पर्वतों के झरनों के प्रपात कल-कल शब्द से ऊपर से गिरते हुए सब ओर से दिशाओं के अन्तराल को शब्दायमान करते हैं । पवित्र जल वाली नदियाँ गम्भीर धारा प्रवाह से बहती हुई सभी दर्शकों के मन को अत्यधिक आनन्दित करती हैं ।पर्वतों के समूह मानों श्रोता के रूप में अवस्थित दिखाई देते हैं और मृग पवित्र वन प्रदेश को शोभायमान करते हैं और शुभ्रवर्ण के खरगोश उल्लासपूर्वक बिना भय के इधर-उधर दौड़ते हुए अति कोमल दूर्वांकुरों का आस्वाद लेते हुए विचरण करते हैं । सिंह, व्याघ्र, भालू, वराह, शृगाल, भेडिया, वृक, बिडाल आदि हिंसक पशु हिंसा का परित्याग कर परम शान्त एवं सात्त्विक

रूप से अवस्थित हैं और वानर एक वृक्ष से दूसरे वृक्ष पर कूदते हुए तथा चारों ओर दौड़ते हुए परस्पर क्रीड़ा करते हैं । सर्प गतिशील होकर सबकी मङ्गलकामना करते हैं । बिच्छू आदि विष वाले जीव विष का परित्याग कर भ्रमण करते हैं । वास्तव में यहाँ परम सात्त्विक दिव्य आश्रमों की विलक्षणता परिलक्षित होती है, जहाँ पर अनेक प्रकार के पुष्पों की सौरभ से सुरभित त्रिविध (शीतल मन्द सुगन्धित) वायु चलता है। कोई शास्त्रानुकूल संगीत के मर्मज्ञ वंशी, वीणा, मृदङ्ग आदि विविध मङ्गल वाद्यों से भगवन्नाम संकीर्तन में संलग्न हैं, कतिपय मनीषी परस्पर ब्रह्म, जीव एवं जगत् विषयक वेदान्त दर्शन की चर्चा करते हुए प्रसन्न मन से शोभायमान हैं ।

**एवंविधे विविधसुरम्यदृश्यपरिलसिते नितान्तशान्ते परमैकान्ते सात्त्विकभावभाविते पुण्यतीर्थस्वरूपे दिव्यतमे महामङ्गलमये सुपावन-तमाऽऽश्रमेऽध्यात्मैकजीवना ऋषयो मुनयस्तपोनिष्ठा निगमागमशास्त्र-स्वाध्यायाभिरताः परमधीराश्च यजनकर्मणि प्रवृत्ताः सुशोभन्ते ।**

इस प्रकार के अनेक रमणीय दृश्यों से शोभायमान अतिशान्त एवं एकान्त सात्त्विक भावालंकृत पवित्रतीर्थस्वरूप अतिदिव्य महामङ्गलयुक्त, परम पावन आश्रम में अध्यात्म जीवनपरायण, तपस्वी, ऋषि-मुनि वेद-तन्त्र पुराणादि शास्त्रों के स्वाध्याय में तत्पर, तपःपरायण परमधीर विद्वज्जन यज्ञादि अनुष्ठान में प्रवृत्त होकर शोभायमान हैं ।

**अथाऽकस्मादेवाऽनेके जघन्यकर्मविदूषितान्तःकरणाः सतत-पातकनिरता निशाचराः शस्त्राऽस्त्रहस्ता वनप्रदेशान्निस्सृत्य ऋषि-मुनिभिः समनुष्ठीयमानमहायागविध्वंसनार्थं समुपस्थिताः सञ्जाताः । मुनिभिश्च नितरां निवारितास्ते यज्ञस्थानं पूर्णतो विध्वंसीकृत्य त्वरितमेव पलायिताः । एवं ह्यपरेऽह्नि तस्मिन्नेवाऽऽश्रमे पुनरेवाऽऽगत्य देवस्थानमाश्रमस्थलमपीतस्ततः सर्वतोऽस्तव्यस्तं विधाय निर्गताः ।**

ऐसे पवित्र आश्रम में सहसा अनेक पापकर्म विदूषित अन्तःकरण वाले निरन्तर पाप-पङ्क संलग्न निशाचर शस्त्र-अस्त्र हाथों में लेकर वन प्रदेश

से निकल करके ऋषि मुनियों द्वारा किये जाने वाले महायज्ञ के विध्वंस के लिए समुपस्थित हुए। मुनियों के द्वारा अनेक बार निवारण करने पर भी यज्ञ-स्थान का पूर्ण रूप से विध्वंस करके शीघ्रता से भाग गये, इसी प्रकार दूसरे दिन भी उसी आश्रम में पुनः आकर देवस्थान और आश्रम स्थल को इधर उधर पूर्ण रूप अस्त-व्यस्त कर चले गये।

**दुर्दान्तक्षपाटविहितदुष्कृत्यखिन्नमानसाः हस्तगृहीतदर्भासन-कमण्डलु-तुलसीकाष्ठमालाः श्रीमदरुणमहर्षिसम्प्रेरिता ऋषि-मुनीश्वराः समवेताः तात्कालिक-भारतवर्षहस्तिनापुर-राज्यसिंहासनाऽऽसीन-स्य शास्त्रनिर्दिष्टमर्यादानुकूलसरणिसंस्थितस्य भागवतधर्मपरि-पालनतत्परस्य श्रीपरीक्षिन्महाराजस्य पवित्रसन्निधौ समुपागताः।**

दुष्ट राक्षसों के दुष्कर्म से खिन्न मन वाले दर्भासन कमण्डलु, कुशा, तुलसीमाला हाथ में लिये हुए श्रीअरुण महर्षि द्वारा प्रेरित ऋषि मुनि सम्मिलित होकर उस समय के भारतवर्षीय हस्तिनापुर राजसिंहासन पर विराजमान शास्त्र-निर्दिष्ट मर्यादानुसार मार्ग पर चलने वाले, भागवत धर्म परिपालन-तत्पर श्रीपरीक्षित् महाराज की पवित्र सन्निधि में उपस्थित हुए।

**राजद्वारपालैर्लब्धवृत्तः पुलकितगात्रः प्रमुदितमनस्कः सदैन्यं पुरतो द्रुतमेव समुपागत्य मधुपर्कादिभि ऋषिमुनीश्वराणां धीराणाञ्च साधुतया सविधि स्वागतं सम्पाद्य परीक्षिन्महाराजः प्रोवाच--**

द्वारपालों के द्वारा वृत्तान्त प्राप्त कर पुलकित शरीर एवं प्रसन्न मन होकर दीनतापूर्वक शीघ्र ही सामने जाकर मधुपर्कादि से ऋषि मुनियों का सम्यक् विधि-विधान से स्वागत करके परीक्षित महाराज बोले--

**महाराजः--**

**भो भो ऋषि-मुनीश्वराः ! यति-सुधी-साधुप्रवराः ! अद्य मे कियच्छुभं सौभाग्यं वरीवर्ति यतो हि भवद्भिः परमानुग्रहपूर्वकं श्रीमच्चरणपङ्कजरजोभिः पवित्रीकृतोऽहं तथा चेदं राजभवनमपि। भव-तामतिदुर्लभं महामङ्गलमयदर्शनं विधायाऽतिकृतार्थोऽहम्। भगवन्**

**परमपूतान्तःकरणैस्तपोनिष्ठैर्भवद्भिराचरितं दैनन्दिनं यज्ञादिसत्कर्मानुष्ठानन्तु निर्विघ्नतया सञ्चलत्येव ? तथा च तत्रभवतां पुण्यमये तीर्थस्वरूपे सुरमणीये परमपवित्राऽऽश्रमे सार्वत्रिकं सर्वविधं कुशलं तु स्वाभाविकमेव ?**

**महाराज--**

हे ऋषि-मुनीश्वरों ! यति, सुधी, साधुप्रवर महानुभावों ! आज मेरा कितना मंगलमय सौभाग्य है, जो आपने परमानुग्रहपूर्वक अपनी चरणकमल रज से मुझे तथा इस राजभवन को पवित्र किया है । आपके अतिदुर्लभ महामङ्गल दर्शन करके अतीव कृतार्थ हुआ हूँ । महाभाग, परम पवित्र अन्तः-करण वाले तपोनिष्ठ आपके द्वारा आचरित दैनिक यज्ञादि सत्कर्मानुष्ठान तो निर्विघ्नतया सम्यक् चलता है ? और आपके पुण्यमय तीर्थस्वरूप सुरमणीय परमपवित्र आश्रम में सर्वत्र सब प्रकार से कुशल तो स्वाभाविक ही है ?

**ऋषिश्वराः--**

**यद्यपि श्रीभगवदनुग्रहेण वयं पूर्णतः प्रसन्नाः स्मस्तथापि यागादिकर्मणि होमावसरे दुर्वृत्तैर्दुर्दान्तैर्दैत्यनिकरैरनारतं नानाऽनर्थपूर्वकदुष्कर्माणि च पौनःपुन्येन परितो विधीयन्ते । अतो हि श्रीभगवदुपासनाभजनानुष्ठानादिकमाह्निकं कृत्यं कृच्छ्रेणैव सञ्चलति, सुतरां भवतैव कार्यमिदं नितरां सम्पत्स्यत इत्यस्माकं द्रढीयान् प्रत्ययः । एतदर्थमेव वयं पूर्णतो निखिलं विविच्य भवत्सविधे समुपस्थिताः स्मः ।**

**ऋषिश्वर--**

यद्यपि श्रीभगवान् के अनुग्रह से हम पूर्णरूप से प्रसन्न हैं, तो भी यज्ञादि कर्म में हवन के अवसर पर दुष्ट दुराचारी दैत्य निरन्तर अनेक प्रकार के अनर्थकारी अत्याचार बारम्बार करते हैं । अतः श्रीभगवान् की उपासना, भजन, अनुष्ठानादिक नित्य कर्म बड़े कष्ट से चलता है । आप ही हमारे इस कार्य का निश्चित रूप से सम्पादन करेंगे, ऐसा हमारा दृढ़ विश्वास है । इसी

कार्य के लिए हम पूर्ण रूप से सब बात का विचार करके आपके पास उपस्थित हुए हैं ।

महाराजः--

अहो महीयान् खेदास्पदीभूतोऽयं विषयः । भगवन् ! सम्प्रति कलियुगारम्भकालः समुपस्थित इति त्वस्माकं दौर्भाग्यमेव, यत्कलिना प्रपीड्यमाना निखिलाः प्रजाः प्रभूतं क्लेशमाकलयन्ति । अयि ऋषिप्रवराः! कलिदमनार्थं मया पूर्णतः प्रयत्नो विहितः, विधीयते च, तथापि युगप्रभावस्तु स्वाभाविक एव । अतोऽपि तत्प्रशमनाय मया यथेष्टं विचेष्ट्यते, किन्तु भगवन् ! सकलजगन्नियामकसर्वेश्वरकृपां विना किमपि भवितुं नार्हति । यदा खलु सर्वान्तरात्मा सर्वज्ञः श्रीहरिः स्वयमेवाऽहोस्विद् भगवदाज्ञप्तः कश्चिद्विशिष्टपार्षदस्वरूपो मनुजरूपेणाऽवतीर्य यावदुपस्थितविकटसंकटकण्टकाऽऽकीर्णसमस्यानिवारणाय नैवाऽऽविर्भवेच्चेत्कथं परमशान्तिसुखानुभूतेः प्रकल्पना । अतो हि भवद्भिरेव समवेतरूपेणैकत्रीभूय वृन्दारकवृन्दानि मन्त्रैराहूय तैस्सह जगन्नियन्तुः श्रीसर्वेश्वरप्रभोरभ्यर्थना विधातव्या, यया मङ्गलप्रार्थनया करुणावरुणालयो हरिः सर्वं शं विधास्यतीति श्रीचरणारविन्देषु मे निवेदनम् । तथा चाऽस्मत्कृतप्रणिपातर्पूवकं निवेदनमिदमपि श्रीमदरुणमहर्षिपदसरोरुहेषु समर्पणीयम् ।

महाराज--

अहो ! यह तो बड़ा ही खेद का विषय है । इस समय कलियुग के आरम्भ का समय आ गया है, यह तो हमारा दुर्भाग्य ही है कि कलियुग से पीड़ित सम्पूर्ण प्रजा बड़े ही क्लेश को प्राप्त हो रही है ।

हे ऋषिप्रवरों ! कलि के दमन के लिये मैं पूर्ण प्रयत्न करता हूँ तो भी युग का प्रभाव तो स्वाभाविक ही है । तथापि उसके प्रभाव के शमन के लिए मैं यथेष्ट चेष्टा करता हूँ, किन्तु हे पृज्यप्रवरों, सम्पूर्ण जगत् के नियामक श्रीसर्वेश्वर भगवान् की कृपा के बिना कुछ भी नहीं हो सकता है । जब

सर्वान्तरात्मा, सर्वज्ञ श्रीभगवान् स्वयं ही अथवा भगवान् की आज्ञा से कोई विशिष्ट पार्षद स्वरूप मनुज रूप से अवतार लेकर जब तक उपस्थित भयङ्कर सङ्कट कंटक व्याप्त समस्या के निवारण के लिए नहीं प्रकट होवे तो कैसे परम शान्ति और सुख की अनुभूति की कल्पना हो सकती है ? अतः आप सबको सामूहिक रूप से एकत्र होकर देव-वृन्दों को मन्त्रों से आह्वान करके उनके साथ जगन्नियन्ता श्रीसर्वेश्वर प्रभु से प्रार्थना करनी चाहिए । जिस मङ्गलप्रार्थना से करुणावरुणालय भगवान् श्रीसर्वेश्वर सब मङ्गल करेंगे, ऐसा आपके चरणारविन्द में मेरा निवेदन है और मेरा प्रणामपूर्वक यह निवेदन भी श्रीमद् अरुण महर्षि के चरणकमलों में समर्पित करें ।

**ऋषयो मुनयः--**

महाराज ! साधु साधु भवद्विचारस्तु परमसाधीयान्वयमद्यैवेतो गत्वा यज्ञानुष्ठानेन निर्जरनिकरान् सन्तुष्टीकृत्य तानाहूय तैः सार्द्धं निखिलब्रह्माण्डनायकस्य जगज्जन्मादिहेतोः सर्वेश्वरस्य भगवतः श्रीकृष्णस्य मङ्गलप्रार्थनां निश्चप्रचं विधास्यामः ।

कल्याणमस्तु ते त्वरितमेवमाशीर्वचनानि सम्यक् प्रदाय स्वाश्रमं प्रति प्रस्थिताः । सर्वेऽपि ऋषि-मुनिमहाभागाः श्रीमदरुणमहर्षि-पावनसन्निधौ समुपस्थाय श्रीपरीक्षिन्महाराजविहितविनम्रनिवेदनं ज्ञापयामासुः । महर्षिवर्योऽपि सर्वं परिज्ञाय प्रमुदितमनस्कः प्रोवाच-यद् द्रागेव महायागसमायोजनं प्रभविष्यतीति नितरां विनिश्चयो ज्ञेयः ।

एकदा चाऽकस्मादेव देवर्षिवर्यः श्रीमन्नारदो वीणां रणयन् परम-मधुराणि परमपावनानि परममङ्गलमयानि भगवच्छ्रीराधासर्वेश्वरनामानि संकीर्तयन्नरुणाश्रमं समाजगाम । ब्रह्मचारिवटुभ्यो वेदमन्त्रान्सम्पाठयन् हठादेव स्वाश्रमे देवर्षिदर्शनं विधाय स्वकीयाऽऽसनात्समुत्थाय पुरतो भूत्वा बद्धाञ्जलिः पुलकितगात्रः प्रमुदितमनस्क ऋषिवरः श्रीमदरुणो मधुपर्कादिभिः श्रीदेवर्षिनारदस्य यथायोग्यं स्वागतं सम्पाद्य विधिवन्नम-स्कृत्य प्रोवाच-भो देवर्षे ! परमं सौभाग्यं मे यदद्य भावत्कमतीवदुर्लभतमं

**पुण्यमयं शुभदर्शनमभिसञ्जातम् । भवत्पादार्पणेन समस्तोऽयमाश्रमः परमपवित्रीभूतः । अत्रत्याऽवनिर्धन्यतमा चाऽभिजाता । वयमत्राऽऽश्रमवासिनोऽपि सर्वतः कृतार्था अभवाम, श्रीमच्चरणपङ्कजपरागपुञ्जैः समे पूर्णतया पावनीभूताः ।**

**ऋषि-मुनि--**

महाराज ! धन्य हैं, आपका विचार परम पवित्र है । हम आज ही यहाँ से जाकर यज्ञानुष्ठान से देवताओं को सन्तुष्ट करके उनका आह्वान कर उनके साथ सकलब्रह्माण्डनायक, जगत् के जन्मादि हेतु श्रीसर्वेश्वर भगवान् श्रीकृष्णचन्द्र की मंगल प्रार्थना निश्चित रूप से करेंगे । आपका कल्याण हो, इस प्रकार आशीर्वाद प्रदान करके उन ऋषियों ने अपने आश्रम के प्रति प्रस्थान किया । सभी ऋषि-मुनि श्रीअरुण महर्षि की पवित्र सन्निधि में समुपस्थित होकर श्रीपरीक्षित् महाराज का विनम्र निवेदन प्रस्तुत किया । श्रीमहर्षिवर अरुण भी प्रसन्न मन होकर बोले कि--शीघ्र ही महायाग का आयोजन होगा, ऐसा दृढ़ निश्चय है ।

एक बार अकस्मात् ही देवर्षिवर श्रीनारद वीणा-वादन करते हुए, परम मधुर, परम पावन, परम मङ्गलमय भगवान् श्रीराधासर्वेश्वर का नाम संकीर्तन करते हुए अरुण मुनि के आश्रम में उपस्थित हुए ।

ब्रह्मचारी शिष्यों को, वेद मन्त्रों को पढ़ाते हुए सहसा ही अपने आश्रम में देवर्षि श्रीनारद के दर्शन करके अपने आसन से उठकर, सामने खड़े होकर, पुलकित शरीर से, प्रसन्न मन से, हाथ जोड़कर श्रीअरुण मुनि ने मधुपर्कादि से श्रीदेवर्षि नारदजी का यथायोग्य स्वागत किया तथा विधिवत् नमस्कार करके बोले--हे देवर्षिवर ! हमारा परम सौभाग्य है जो कि आज आपका बहुत ही दुर्लभ, पुण्यमय शुभदर्शन हुआ । आपके पदार्पण से यह समस्त आश्रम परम पवित्र हो गया और यहाँ कि भूमि धन्यतम हो गई । हम आश्रमवासी भी सब प्रकार से कृतार्थ हो गये । आपके चरण-कमल के पराग पुञ्ज से सभी पूर्णतया पवित्र हो गये ।

**देवर्षिः--**

**ऋषिवर ! भवदाश्रमेऽस्मिन् सर्वविधं सार्वत्रिकं मङ्गलं कुशलं तु वर्तते ? न काऽपि विप्रतिपत्तिर्न कोऽपि प्रत्यवायः ?।**

**देवर्षि--**

ऋषिप्रवर ! आपके इस आश्रम में सर्वत्र सब प्रकार मंगल कुशल तो है ? आश्रम में किसी प्रकार का कोई कष्ट या विघ्न तो नहीं है ?

**ऋषिवर–श्रीमदरुणः--**

**देवर्षे ! यद्यपि भवदनुग्रहेण सर्वं साधीयः । आश्रमस्थाः सर्वेऽपि ऋषि–मुनीश्वरा निगमागमस्वाध्यायनिरता ब्रह्मचारिणो दिव्य–दुग्धाऽमृतप्रदा रोमन्थनिरताः सवत्सा धेनुनिवहाः, परममधुरकलरवपरं पतत्रिपुञ्जम् हरितमृदुदूर्वाङ्कुरचर्वणरताः कुरङ्गनिकराश्च सुरभित–सुभगसुमनोऽन्वितविविधफलप्रपूरितपादपवल्लयः, निर्मलमधुर–वारिभरितसरिन्निर्झरप्रपाता, गिरिकदम्बाऽऽदयः सर्वे सर्वतः सर्वथा परम–मङ्गलमाकलयन्ति, परं देवर्षे ! अपत्यमन्तरा चेखिद्यते मे चेतोऽनारतम्। अतो हे कृपानिधे ! मदीयाऽभीष्टपूर्तिर्यथा प्रभवेन्महनीयां दिव्यतमा–मनुकम्पां विदधातु, तथा च साम्प्रतं कलिप्रभावान्निशाचरैः प्रपीड्यमाना वयं कार्त्स्न्येनैव यज्ञादिसत्कर्माणि सम्पादयितुं समर्थाः प्रभवेम, अतो हे देवर्षे ! तन्निरोधोपायमपि सानुग्रहं सन्निर्दिशतु ।**

**श्रीअरुण ऋषि--**

हे देवर्षे ! यद्यपि आपके अनुग्रह से सब समीचीन है, आश्रम में स्थित सभी ऋषि-मुनीश्वर एवं ब्रह्मचारी निगम-आगम के स्वाध्याय में तत्पर हैं, दिव्य दुग्धामृत प्रदान करने वाली बछड़ों सहित गौ माताएँ रोमन्थ (जुगाली) करती हुई, अतीव मधुर शब्द करते हुए पक्षियों का समूह और मृदु दूर्वांकुरों से निर्वाह करते हुए हरिण समूह, सुगन्धित पुष्पों से युक्त विविध फलों से परिपूर्ण वृक्ष निर्मल और मधुर जल से परिपूर्ण नदियों के झरने, पर्वत-समूह

आदि सब प्रकार से प्रमुदित हैं । इस प्रकार सब ओर से परममंगलमय हैं, किन्तु हे देवर्षे ! पुत्र के बिना हमारा चित्त निरन्तर खिन्न रहता है । अतः हे कृपानिधे ! मेरी अभीष्टसिद्धि जिस प्रकार पूर्ण हो, ऐसी बड़ी दिव्य अनुकम्पा कीजिये और इस समय कलि के प्रभाव से आसुरीवृत्ति से पीड़ित हुए हम सम्पूर्णतया यज्ञादि सत्कर्मों का सम्पादन करने में समर्थ हों, इसलिए हे देवर्षे! उनके निरोध का उपाय भी कृपा करके बताइये ।

**देवर्षिः--**

**ऋषिवर ! मा विचिन्तय, यावन्निखिलमन्त्रसमूहशेखरः श्रीगोपालमन्त्रराजो** गृह्यताम् । **अस्याऽनुष्ठानेन सर्वार्थसिद्धिर्जायते। सुतोपलब्धिस्तु ध्रुवैव । असुराणां निरोधोऽपि श्रीमद्धरेरनुग्रहेणै-वाऽवश्यम्भावी । एवं समुपदिश्य देवर्षिवर्य्यः श्रीमन्नारदो विपञ्चीं वादयन् श्रीहरेरतिदिव्यतमानि परमललितानि मङ्गलमयानि नामानि प्रगायन् लोकलोकान्तरं जग्मिवान् ।**

देवर्षि--

ऋषिवर ! चिन्ता मत कीजिये । समग्र मन्त्रों के शिरोमणि श्रीगोपाल-मंत्रराज को ग्रहण कीजिये क्योंकि इसके अनुष्ठान से सभी प्रकार की सिद्धि होती है । निश्चित रूप से पुत्र की प्राप्ति तो होगी ही, राक्षसों का निरोध भी श्रीहरि अनुकम्पा से अवश्य होगा । इस प्रकार उपदेश देकर देवर्षिवर नारद वीणा-वादन करते हुए श्रीहरि के दिव्यतम, अत्यधिक सुन्दर, मङ्गलमय नामों का गान करते हुए लोक-लोकान्तरों के लिए प्रस्थान किया ।

**इतस्तु सकललोकमङ्गलाऽभीप्सुर्ऋषिवर्यः श्रीमदरुणोऽपि देवर्षि-प्रदत्तश्रीगोपालमन्त्रराजस्य दिव्यानुष्ठानं शास्त्रविहितविधिना सम्पाद्य ऋषि-मुनिप्रवरैः सह यागमेकं समायोज्य सुरगणान् सन्तुष्टीकृत्य समाहूय च तैः सार्द्धं निखिलजगन्नियन्तुर्भगवतः सर्वेश्वरश्रीकृष्णस्य परममङ्गलमयीं प्रार्थनां चकार ।**

इधर सकल लोक की मङ्गल कामना के लिए ऋषिवर श्री अरुण मुनि ने भी देवर्षि श्रीनारद द्वारा दिये गये श्रीगोपालमंत्रराज के दिव्य अनुष्ठान का शास्त्र विधि द्वारा सम्पादन करके ऋषि-मुनियों के साथ एक याग का समायोजन किया और देव वृन्दों को प्रसन्न करके उनका आह्वान कर, उन्हीं के साथ निखिल संसार के उपकारक भगवान् सर्वेश्वर श्रीकृष्ण की परममङ्गलमयी प्रार्थना की ।

**ऋषि–मुनि–सुर–नर–किन्नरादिविहितकरुणाऽभ्यर्थनामाकर्ण्य पुराणपुरुषोत्तमः करुणावरुणालयः परब्रह्मसर्वेश्वरो भगवान् श्रीकृष्ण ऋषि–मुनि–सुरसमूहमध्ये द्रुतमेव प्रादुर्भूय निशाचरोपद्रवविपन्नान् स्वीययुग्मपदपङ्कजप्रपन्नान् समवेतसमुपस्थितान्सर्वान्संवीक्ष्य समुपदिदेश। भो भो ऋषयो–मुनीन्द्राश्च ! देवगणाः ! मा विचिन्तयन्तु त्वरितमेवाऽसुराणां पराभवो भविष्यति। मदीयाऽयुधराजसुदर्शनवर्यो मनुजरूपेणाऽवनाववतीर्य झटिति तेषां विनाशं विधास्यतीति समुपदिश्य स्वकीयदिव्यकृपाकटाक्षपातैर्निखिलानभिषिच्य सपदि नभसि विद्युद्वदन्तर्दधौ ।**

ऋषि, मुनि, देवता, मनुष्य और किन्नर आदि द्वारा की गई करुणामयी प्रार्थना को सुनकर पुराण पुरुषोत्तम करुणावरुणालय परमब्रह्म भगवान् श्रीसर्वेश्वर कृष्ण ने ऋषि-मुनि और देवताओं के मध्य शीघ्र ही प्रकट होकर राक्षसों के उपद्रव से पीड़ित अपने चरण कमलों में शरणागत एक साथ सभी को उपस्थित देखकर उपदेश प्रदान किया । हे ऋषि-मुनियों ! देवताओं ! चिन्ता मत करो, शीघ्र ही राक्षसों का विनाश होगा । मेरा आयुध चक्रराज सुदर्शन पृथ्वी पर मानव रूप में अवतरित होकर शीघ्र ही उनका विनाश करेंगे। इस प्रकार उपदेश देकर अपनी दिव्य कृपादृष्टि से सबको कृतार्थ करते हुए उसी क्षण आकाश में बिजली के समान अन्तर्धान हो गये ।

**सुदर्शनचक्रधारी भक्तवाञ्छाकल्पतरुर्भगवान्मुकुन्दः श्रीकृष्णः स्वकीयनित्यदिव्यपार्षदमसीमबलसम्पन्नं स्वीयकरारविन्दाङ्गुलौ नित्य**

**सुशोभमानं श्रीमत्सुदर्शनाऽऽयुधराजं समादिष्टवान्--**

सुदर्शन चक्र धारण करने वाले, भक्तों की इच्छापूर्ण करने में कल्पवृक्ष के समान भगवान् मुकुन्द श्रीकृष्ण ने अपने नित्य दिव्य पार्षद, अतुलित बलयुत अपने कर कमल की अङ्गुली में सर्वदा शोभायमान श्रीयुक्त सुदर्शन आयुधराज को आदेश प्रदान किया--

**सुदर्शन ! महाबाहो ! कोटिसूर्यसमप्रभ ! ।**
**अज्ञानतिमिरान्धानां विष्णोर्मार्गं प्रदर्शय ।।**

हे विशाल भुजावाले, कोटि सूर्य के समान कान्ति वाले, सुदर्शन चक्रराज ! अज्ञानरूपी अन्धकार से अन्धे मनुष्यों को भगवान् विष्णु के मार्ग का ज्ञान कराईये ।

**हे चक्रराज ! सुदर्शन ! कोटिसूर्यसमप्रभ ! भूतले भारतवर्षे दक्षिणदिग्भागे पवित्रक्षेत्रे पुण्यसलिलायाः गोदावर्याः परमपावनतटस्थिते वैडूर्यपत्तने परमशोभायमाने वेदवेदाङ्गपारंगततपोनिष्ठपरमभागवतस्य महर्षिवरस्य श्रीमदरुणस्य पवित्राऽऽश्रमे तद्भार्यायाः श्रीजयन्त्याः कुक्षौ मनुजस्वरूपेण समवतीर्य श्रुतिसिद्धान्तविपरीतान्नानाऽनर्थकर्मनिरता-न्विविधानसुरान् तथा च दुष्कृत्यपरायणान्धर्मविपरीतान्दुष्टजना-न्स्वकीयाऽपरिमितप्रखरतेजसा सर्वान्सर्वतो निराकृत्य देवर्षिनारदात् सम्प्रदायपुरस्सरां वैष्णवीं दीक्षामादाय अनादिवैदिकसनातनवैष्णवधर्मस्य च सार्वत्रिकः प्रसारस्त्वया विधीयताम् ।**

हे चक्रराज ! करोड़ों सूर्य के समान तेजवाले सुदर्शन ! भारतवर्ष के भूमण्डल पर दक्षिण दिशा में पावन सलिला गोदावरी के परम पवित्र तट पर स्थित वैदूर्यपत्तन ( मूंगी-पैठन ) नामक पवित्र क्षेत्र में परम शोभायमान, वेद वेदाङ्ग में पारङ्गत, तपोनिष्ठ परम भागवत, महर्षि प्रवर श्रीमद् अरुण के पवित्र आश्रम में उनकी धर्मपत्नी श्री जयन्ती के कुक्षी में मनुष्य रूप से अवतार लेकर वैदिक सिद्धान्त के विरुद्ध अनेक पाप कर्म में निरत नाना प्रकार के राक्षसों को और पाप कर्मपरायण धर्म के विरुद्ध आचरण करने वाले दुष्ट

मनुष्यों को अपने अतुलित प्रखर तेज से सब प्रकार से सबको परास्त करके, देवर्षिवर्य श्रीनारद से सम्प्रदायपूर्वक वैष्णवी दीक्षा प्राप्त कर, वैष्णव धर्म और अनादि वैदिक सनातन धर्म का आप सर्वत्र प्रसार कीजिये ।

**श्रीमत्सुदर्शनचक्रराजोऽपि श्रीहरेराज्ञामवधार्य विधिवत्प्रणम्य परिक्रम्य च भूलोके भारते श्रीमदरुणमहर्षेर्भार्योदरदरीं प्रविवेश ।**

श्रीसुदर्शन चक्रराज ने भी श्रीभगवान् की आज्ञा को शिरोधार्य करके विधिवत् प्रणाम कर और परिक्रमा कर भारतवर्ष की पावन धरा धाम पर श्रीअरुण महर्षि की धर्मपत्नी के उदर में प्रवेश किया ।

**सम्प्राप्ते च समये द्वापरान्ते कलियुगारम्भकाले कार्तिकशुक्ल-पूर्णिमायां पुण्यतिथौ बुधवासरे सायंसमये गोधूलिवेलावसरे वृषराशौ मेषलग्ने कृत्तिकानक्षत्रे चन्द्र-मङ्गल-बुध-गुरु-शनैश्चरेषु पञ्चसु ग्रहेषूच्चस्थेषु सत्सु परमपावनपर्वणि चाऽविर्बभूव जयरूपिण्याः जयन्तीमातुः शुभोदराद् भगवान् सुदर्शनचक्रराजः ।**

समय प्राप्त होने पर द्वापर के अन्त तथा कलियुग के आरम्भ के समय कार्तिक शुक्ला पूर्णिमा बुधवार के मंगलमय सायं समय गोधूली वेला तथा वृषराशि, मेषलग्न एवं कृत्तिका नक्षत्र में चन्द्र, मंगल, बुध, गुरु और शनि इन पाँच ग्रहों के उच्च स्थान में स्थित होने पर परम पवित्र पर्व में भगवान् श्रीसुदर्शन चक्रराज जयरूपिणी जयन्ती माता के परम मंगलमय उदर से प्रकट हुए ।

**आविर्भूते च चक्रराजे तत्क्षणादेवाऽन्तरिक्षाद्वृन्दारकवृन्दैर्दिव्य-सुरभितसुमनोवृष्टिरकारि । अरुणाश्रममभितश्चाऽऽनन्दोल्लासपूर्वकं मङ्गलमधुरवाद्यध्वनिं प्रकुर्वाणा बन्दिजनाः समुत्फुल्लमनस्का नृत्यन्त आसन् । वैदिकाः विपश्चितो विप्रा ब्रह्मचारिवटवश्च सस्वरवेदमन्त्रान् समुच्चारयन्तः परमप्रमुदिताः जाताः । सौभाग्यवत्यो नार्यश्च नानाविध-नवकौशेयवसनै-र्विविधरत्नजटितकनकाऽलङ्कारैः सुसज्जिता मङ्गल-कलशान्समादाय कलितमधुरमङ्गलगीतानि प्रगायन्त्योऽतीवानन्दं प्रकटयन्तिस्म । महर्षिवरश्रीमदरुणसुतजन्मवृत्तं श्रावं श्रावञ्चा-**

**ऽनेकेऽरुणाश्रममागत्य ऋषि-मुनीश्वरप्रवराः सस्वरं श्रुतिमन्त्रैर्नव-जाताऽरुणसूनवे मुहुर्मुहुर्मङ्गलं कामयमानाः समजनिषत ।**

भगवान् श्रीचक्रराज के प्रकट होने पर उसी क्षण आकाश से देववृंद ने दिव्य सुरभित पुष्पों की वर्षा की । महर्षि श्रीअरुण के आश्रम के चारों ओर आनन्द एवं उल्लासपूर्वक माङ्गलिक एवं मधुर वाद्यों की ध्वनि करते हुए बंदिजन अति उल्लासपूर्णमन होकर नृत्य कर रहे थे । वैदिक विद्वान् ब्राह्मण और ब्रह्मचारी बालक सस्वर वेदमंत्रों का उच्चारण करते हुए अत्यधिक प्रसन्न थे । सौभाग्यवती महिलाएँ अनेक प्रकार के नवीन रेशमी वस्त्रों से और अनेक प्रकार के रत्नजटित स्वर्णाभूषणों से सुसज्जित होकर मङ्गल कलश लेकर सुन्दर मधुर मङ्गलगीत गाती हुई अत्यन्त आनन्द प्रकट कर रही थीं । महर्षिवर श्रीअरुण के पुत्रजन्म समाचार को सुन सुनकर अनेक श्रेष्ठ ऋषि-मुनि-महर्षि अरुण के आश्रम पर आकर सस्वर वेदमन्त्रों से नवजात महर्षि श्रीअरुण के पुत्र के लिए बारम्बार मङ्गल कामना कर रहे थे ।

**नियमानन्देत्युदाहृतनामकरणसंस्कारमहोत्सवे बहवो विप्रा ऋषि-मुनि-यति-सुधी-साधुप्रवरा यथेष्टं सदक्षिणं विविधमधुर-श्रीभगवत्प्रसादं समुपलभ्याऽतितरां सन्तुष्टाः समभवन् । एवं हि श्रीमदरुणमहर्षिसम्पादितगोवृन्दपूजनाऽवसरेऽपि बहुविधविशेषाऽल-ङ्कारभूषणैः पूर्णतः परितृप्ताः प्रमुदिता विप्रमहानुभावा बन्दिनो गुणि-जनाश्च ।**

'नियमानन्द' इस नाम से किये जाने वाले नामकरण संस्कार में अनेक विप्र, ऋषि, मुनि, यति, सुधी एवं साधुप्रवर इच्छानुसार दक्षिणा सहित अनेक प्रकार के भगवान् के मधुर प्रसाद को प्राप्त करके अत्यन्त सन्तुष्ट हुए । इसी प्रकार श्रीअरुण महर्षि द्वारा सम्पादित गौ माताओं की पूजा के समय भी अनेक प्रकार के विशेष अलङ्कार आभूषणों से पूर्ण रूप से तृप्त होकर विप्र महानुभाव तथा बंदीजन एवं गुणीजन परम प्रसन्न हो गये ।

**कतिपयकालानन्तरमेव श्रीसुदर्शनावतारो जगतीह मनुजलीला-स्वरूपो भगवन्नियमानन्दः पञ्चहायनवयस्कबालरूपो जातः । अत्यल्पवयस्येव श्रीनियमानन्दस्य शास्त्रस्वाध्यायपरतामभिवीक्ष्य महर्षिरतीवाऽऽनन्दमाप्तवान् । प्राप्ते चाऽष्टमवर्षे विधिवदुपनीतस्य वेदविहितविधिना पित्रा वेदारम्भो व्यधायि ।**

**वेद-वेदाङ्ग-वेदान्तादिसकलशास्त्राणां स्वपितुः श्रीमदरुणमहर्षेरेव सम्यग्ज्ञानमुपलभ्य प्रखरवैदुष्यमधिगतं श्री-नियमानन्देन । सर्वेऽप्याश्रमवासिनः श्रीमन्नियमानन्दस्य परमाद्भुत-प्रतिभां लोकोत्तरचमत्कृतिं दर्शं दर्शं परमविस्मयान्विताः समभवन् ।**

कुछ समय के अनन्तर ही इस संसार में श्रीसुदर्शनावतार मनुष्य लीला स्वरूप भगवान् नियमानन्द पाँच वर्ष के बालक हुए । स्वल्प आयु में ही श्री नियमानन्द की शास्त्रों के स्वाध्याय में निष्ठा को देखकर महर्षि को अतीव आनन्द प्राप्त हुआ । अष्टम वर्ष में पिताश्री ने बालक का वेद विहित विधि से उपनयन संस्कार कर वेदारम्भ कराया । श्रीनियमानन्द ने अपने पिताश्री अरुण महर्षि से ही वेद-वेदाङ्ग एवं वेदान्त आदि समस्त शास्त्रों का सम्यक् ज्ञान प्राप्त कर विशिष्ट वैदुष्य प्राप्त किया । समस्त आश्रमवासी श्रीनियमानन्द की परम अद्भुत प्रतिभा एवं अलौकिक चमत्कार को देख-देख कर अत्यधिक आश्चर्य चकित थे ।

**एकदा च दक्षिणयात्राप्रसङ्गे केचन व्रजवासिनो विप्रजनाः तीर्थयात्रां प्रकुर्वाणा अकस्मादेवाऽरुणाश्रममुपागताः । महर्षिभिः सत्कृतास्ते परमपुलकायमानाः सञ्जाताः । व्रजवासिविप्रेभ्यो व्रजधाम्नोऽसमोर्ध्वमाहात्म्यं श्रावं श्रावं श्रीनियमानन्दः, स्वपितृचरणा-ऽरुणमहर्षिवर्यपदाम्भोजयोर्विधिवत्प्रणम्य व्रजदर्शनोत्कण्ठां बद्धाञ्जलि-र्विनिवेदयामास । श्रीनियमानन्दस्य व्रजदर्शनसमीहामवगम्य व्रजविप्रै-र्निगदितं यत्सम्प्रति वयं दक्षिणभारतस्याऽवशिष्टयात्रां द्रुतमेव सम्पाद्य परावृत्य च तथेममाश्रमं समागत्य व्रजप्रस्थानं विधास्यामस्तदैव भवद्भिः**

सर्वैरप्यस्माभिः सह व्रजयात्रा साधुतया सम्पादनीयेति निगद्य श्रीराधे ! श्रीराधे ! इत्युद्घोषसंवलितानि श्रीकृष्णाह्लादिनीशक्त्याः श्रीराधाया महामधुरातिमधुराणि परममङ्गलमयपावनतमानि सुभगानि नामानि समुच्चरन्तः प्रस्थितवन्तः । इतस्तु श्रीनियमानन्दो व्रजवृन्दावनधामदर्शनं प्रतीक्षमाणो बहुभिर्ब्रह्मचारिवृन्दैः साकं स्वाध्यायकर्मणि तन्मयतया प्रवृत्त आसीत् ।

एक बार दक्षिण यात्रा प्रसङ्ग में कुछ व्रजवासी ब्राह्मण-जन तीर्थ यात्रा करते हुए सहसा अरुणाश्रम में आ गये । महर्षि अरुण के सत्कार से वे परम पुलकित हो गये । व्रजवासी ब्रह्मणों से व्रजधाम की महिमा को सुन-सुनकर श्रीनियमानन्द ने अपने पिता श्रीअरुण महर्षिवर के चरण कमलों में विधिवत् प्रणाम कर व्रजधाम को देखने की सदिच्छा हाथ जोड़कर निवेदित की । श्रीनियमानन्द की व्रज-दर्शन सदिच्छा को देखकर व्रजवासी ब्राह्मणों ने कहा कि अभी हम दक्षिण भारत की शेष यात्रा शीघ्र ही सम्पन्न कर, पुनः इस आश्रम में आकर व्रज के लिए प्रस्थान करेंगे, तब आप सभी हमारे साथ व्रज यात्रा अच्छी तरह सम्पादन कर सकेंगे, इस प्रकार कह कर-श्रीराधे ! श्रीराधे! इस जयघोष के साथ श्रीकृष्ण की आह्लादिनी शक्ति श्रीराधा के मधुर-मधुर, परम मंगल, परम सुन्दर नामों का उच्चारण करते हुए वहाँ से प्रस्थान किया । इधर श्रीनियमानन्द भी व्रज वृन्दावन धाम के दर्शन की प्रतीक्षा करते हुए अन्य ब्रह्मचारियों के साथ स्वाध्याय कर्म में तन्मयता से लग गये ।

व्यतीते च समये वचनबद्धाः व्रजविप्राः स्वकीयां तीर्थयात्रां सम्पाद्याऽरुणाश्रमं पुनरेव यथाकालं समागतवन्तः । समायातेषु व्रजवासिजनेषु श्रीनियमानन्देन व्रजयात्राजिगमिषा श्रीपितृचरणाम्बुजानां पुरस्तात्पुनरपि निवेदिता । ऋषिवरेण श्रीमदरुणमहर्षिणा तथा च मात्रा जयन्तीदेव्या च स्वसुतस्य तीव्रां व्रजजिगमिषामवगम्य व्रजयात्राया उपक्रमः समायोजितः ।

समय व्यतीत होने पर वचनों से बंधे हुए व्रजवासी ब्राह्मण अपनी तीर्थयात्राओं को पूर्ण कर यथासमय अरुण आश्रम में लौटे । व्रजवासीजनों के आने पर श्रीनियमानन्द ने व्रजयात्रा की सदिच्छा का पुनः श्रीपिता के चरण-कमलों में निवेदन किया । ऋषिवर श्रीअरुण महर्षि के द्वारा और माता जयन्तीदेवी के द्वारा अपने पुत्र की व्रजयात्रा सम्बन्धी सदिच्छा जानकर व्रज-यात्रा की रूपरेखा तैयार की ।

**ऋषिवरश्रीमदरुणसमायोजितो व्रजयात्रावृत्तस्तडिद्वत्तीव्रतया पार्श्ववर्तिषु समस्ताऽऽश्रमेषु ऋषि–मुनीनां पुरतः प्रासरत् । तेऽपि समे सर्वत एकत्रीभूयाऽरुणाश्रमे खिन्नमानसाः समाजग्मुः । यात्राहेतुं विजिज्ञासमाना अरुणाश्रमस्था वेदादिशास्त्रस्वाध्यायशीला ब्रह्म-चारिणोऽपि हृदि क्लिश्यमाना अश्रुपूरिताः श्रीमन्महर्षिसविधे बद्धपाणय उपस्थाय तच्चरणसरोरुहेषु विनिपत्य निगदितवन्तः । हे महर्षे ! वयमा-श्रमवासिनो ब्रह्मचारिणो भवन्तमन्तरा कथं वेदादिस्वाध्यायमध्यात्मज्ञानं कथञ्च कालयापनमपि विधास्यामः । समुपस्थितानां ऋषि–मुनि–महानुभावानामन्तर्भावनां संश्रुत्य प्रोवाच श्रीमन्महर्षिवर्योऽरुणः । यद्भो ! ऋषिमुनिवरिष्ठाः ! बालकनियमानन्दस्य तीव्रतरां व्रजदर्शन–समुत्कण्ठां वीक्ष्य मया व्रजयात्राया आयोजनं निर्धारितम् । मामकीना स्पृहाऽपि स्वान्ते समुत्पन्ना यदनेन व्याजेन व्रजधाम्नो दिव्यदर्शनलाभः प्रभविष्यतीतिकृत्वैवैतद्यात्राऽऽयोजनं विहितम् । अस्याऽऽश्रमस्य निखिला व्यवस्था भवद्भिरेव सम्पादनीयेत्यस्मदीया पवित्राऽन्तर्भावना संरक्षणीया। तथा च हे श्रुतिस्वाध्यायरता अन्तेवासिनो ब्रह्मचारिणः ! कथमपि यूयं खेदं मा वहत । अत्रत्या इमे ऋषिमुनिप्रवरा आश्रमीयसकलसुव्यवस्थां वेदादिशास्त्राध्ययनादिनिखिलकार्यजातं सौकर्येणैव निश्चप्रचं सम्पादयिष्यन्तीति सर्वान्समाश्वास्य व्रजवासिभिः सह सपरिकरोऽरुणमहर्षिवरो व्रजयात्रार्थं मंगलप्रस्थानं चकार ।**

ऋषिवर श्रीअरुण द्वारा समायोजित व्रज यात्रा का समाचार बिजली के समान शीघ्रता से समीपस्थ सब आश्रमों में ऋषि मुनियों के समक्ष फैल गया। वे सभी सब ओर से एकत्र होकर खिन्न मनस्क हो श्रीअरुण ऋषि के आश्रम में आये। यात्रा के कारण को जानने की इच्छा वाले अरुणाश्रम में रहने वाले वेदादि स्वाध्याय परायण ब्रह्मचारियों ने भी मन में दुःखी होते हुए, अश्रुपूरित नेत्रों से श्रीअरुण महर्षि के समीप उपस्थित होकर उनके श्रीचरणों में प्रणाम निवेदन कर कहा--हे महर्षे! हम आश्रमवासी ब्रह्मचारी आपके बिना किस प्रकार वेदादि स्वाध्याय एवं अध्यात्म ज्ञान को प्राप्त कर सकेंगे और समय को भी कैसे व्यतीत करेंगे। उपस्थित हुए ऋषि-मुनि, महानुभावों की आन्तरिक भावना को सुनकर श्रीमहर्षि अरुण बोले--हे ऋषि मुनीश्वरो! बालक नियमानन्द की व्रज दर्शन की अत्यधिक उत्कण्ठा को देखकर मैंने व्रज यात्रा का आयोजन निश्चित किया है। मेरे भी अन्तःकरण में ऐसी इच्छा उत्पन्न हुई है कि मुझे भी इसी बहाने व्रजधाम के दिव्य दर्शन का लाभ प्राप्त होगा। अतः इसी विचार से ही हमने इस यात्रा का आयोजन किया है। इस आश्रम की सम्पूर्ण व्यवस्था आपको ही सम्पादित करनी है। आप सभी मेरी इस आन्तरिक भावना की रक्षा करना और हे वेद के स्वाध्याय में तत्पर ब्रह्मचारी छात्रों! किसी भी प्रकार से खेद न करें। यहाँ के निवासी ये ऋषि-मुनि-प्रवर आश्रम की सम्पूर्ण व्यवस्था को और वेदादि शास्त्रों के अध्यापन आदि समस्त कार्यों को निश्चित रूप से सरलता से सम्पादन करेंगे इस प्रकार सभी को आश्वासन प्रदान कर व्रजवासियों के साथ सपरिवार श्रीअरुण महर्षि ने व्रज यात्रा के उद्देश्य से मंगल प्रस्थान किया।

**व्रजयात्राप्रसङ्गे सपरिकर ऋषिवर्योऽरुणः पथि समागतेषु विभिन्नतीर्थेषु स्नानमार्जनाऽऽचमनादिना परमानन्दमनुभवन्, तत्र च किञ्चिद्विश्रम्य तीर्थस्थलानि प्रणम्य सोल्लासं विचरन्कतिपयदिवसान्तरे जगत्स्रष्टुर्भगवतो वेधसः परमपावनस्थलं श्रीहंसावतारस्थलञ्च निखिल-तीर्थगुरुं श्रीपुष्करतीर्थं समागच्छत्। अत्र च कियत्कालं समोदमुषित्वा**

**मार्गे गालवतीर्थादिदर्शनं कारं कारं सर्वनियन्तुः सर्वेश्वरभगवतः श्रीराधाकृष्णस्य सच्चिदानन्दमयं पावनातिपावनतमं दिव्यातिदिव्यं परमरम्यं श्रीव्रजधाम तथा च श्रीकृष्णावतारधरां मथुरापुरीं दूरत एवाऽवलोक्य बारम्बारमभिनमन्व्रजपवित्रवसुन्धरादिव्यरजांसि शिरसि सादरं धारयित्वा श्रीकलिन्दजातटमासाद्य तत्र दिव्यगभीराऽच्छमहा-मधुरधारायां विधिवत्स्नात्वाऽऽचम्य च महाहर्षमवाप ।**

व्रजयात्रा प्रसङ्ग में सपरिवार ऋषिवर अरुण ने मार्ग में आये अनेक तीर्थों में स्नान, मार्जन, आचमन से परम आनन्द का अनुभव करते हुए वहाँ पर कुछ विश्राम कर, तीर्थ स्थलों को प्रणाम कर, उल्लासपूर्वक विचरण करते हुए, कुछ ही दिनों में जगत्स्रष्टा भगवान् ब्रह्मा के परम पावन स्थल और हंसावतार स्थल समग्रतीर्थों के गुरु श्रीपुष्करराज को प्राप्त किया । यहाँ पर कुछ समय प्रसन्नचित्त रह कर, मार्ग में गालव (गलता) आदि तीर्थों के दर्शन करते, सर्वनियन्ता सर्वेश्वर भगवान् श्रीराधाकृष्ण की सत्, चित् आनन्दस्वरूप परम पवित्र दिव्यातिदिव्य, परम सुन्दर श्रीव्रजधाम और श्रीकृष्णजन्मभूमि मथुरापुरी को दूर से ही देख कर बार-बार नमन किया और व्रज की परम पवित्र धरा की अलौकिक रज को शिर पर धारण कर श्रीयमुना के तट पर पहुँचे और वहाँ दिव्य-गम्भीर निर्मल महती मधुर धारा में विधिवत् स्नान और आचमन कर, महान् हर्ष को प्राप्त किया ।

**अनन्तकोटिब्रह्माण्डनायकस्य क्षराक्षरातीतस्य निखिलजग-ज्जन्मादिहेतोः सर्वनियन्तुः सर्वान्तर्यामिणः सर्वद्रष्टुः सर्वज्ञस्य सर्वात्मनः सर्वेश्वरस्य कर्तुमकर्तुमन्यथाकर्तुंसर्वसमर्थस्य मुक्तोपसृप्यस्य निरतिशय-सौन्दर्य-माधुर्य-सौशील्य-सौकुमार्य-लावण्य-कारुण्य-मार्दवौदार्या द्यनन्तकल्याणगुणगणमहोदधेरखिलरसामृतसिन्धु-सारविग्रहस्य नवाम्बुदानीकमनोहरस्य कोटिकन्दर्पदर्पदलनपटी-यसोऽकारणकरुणावरुणालयस्य दयासिन्धोरनन्तसखीवृन्दपरिसेवि-तस्य भगवतः श्रीराधाकृष्णस्य कलकलकल्लोलिनीकलिन्दजाकूल-**

परिलसितं शुक-पिक-सारिका-मयूरादिखगवृन्दकलितकलरवाभि-गुञ्जितं विविधलतातरुसुमनस्सुरभितं सच्चिन्मयं नित्यललितलीला-स्थलं परमदिव्याऽप्राकृतधाम श्रीमद्-**वृन्दावनं** चारुतया विधिवत्प्रणम्य तस्याऽनुपमं दिव्यदर्शनं विधाय लोकोत्तरां परमाद्भुतां परमसुभगशोभां मुहुर्मुहुरवलोक्य ऋषिवर्यः **श्रीमदरुणः** परमविस्मयान्वितो भूत्वा मथुरा-पुरीमाजगाम । अत्राऽपि परमदिव्यसुरम्यपुण्यस्थलानां सम्यग्दर्शनं सम्पाद्य तरणितनयाप्रतीरमवाप्य विधिवदाचम्य मार्जयित्वावृषभानुपुर (वरसाना) नन्दग्रामगोकुलादिपरमपावनस्थलानामपि मङ्गलदर्शनञ्च विधाय गिरिराजगोवर्धनं समागतवान् । सपरिकरो महर्षिवर्यो मानसी-गङ्गायां संस्नायाऽऽचम्य श्रीगोवर्धनपरिक्रमामकरोत् । श्रीनियमानन्दस्तु परमप्रमुदितमनस्को महर्षिणा सार्द्धं स्वीयव्रजदर्शनाभिलाषं महनीयमञ्जुलमनोरथञ्च साङ्गोपाङ्गं पूर्णतया प्रपूरितवान् । जयन्ती-माताऽपि स्वकीयं सौभाग्यं धन्यतमं मन्यमाना परमानन्दं प्राप्तवती।

अनन्तकोटिब्रह्माण्ड के नायक, क्षर-अक्षर से परे, अखिल संसार के जन्मादि कारणस्वरूप, सर्वनियन्ता, सर्वान्तर्यामी, सर्वद्रष्टा, सर्वज्ञ, सर्वात्मा श्रीसर्वेश्वर, करने, न करने एवं अन्यथा करने में सर्वसमर्थ, मुक्त जीवों के प्राप्त करने योग्य, अतिशय सौन्दर्य, माधुर्य, सौशील्य, सौकुमार्य, लावण्य, कारुण्य-औदार्य-मार्दवादि अनन्त कल्याणरूपी गुण समूह के सागर, सम्पूर्ण रसरूपी अमृत सागर के साररूप विग्रह, नवीन मेघ सदृश मनोहर, करोड़ों कामदेवों के अभिमान का ध्वंस करने में समर्थ, अकारणकरुणारूप दया के सागर, असंख्य सखी समूह से सेवित भगवान् श्रीराधाकृष्ण के कल-कल शब्दायमान यमुना के तट पर शोभायमान शुक (तोता), कोयल, सारिका, मयूरादि पक्षीगण के सुन्दर कलरव से गुञ्जायमान, अनेक प्रकार के लता-वृक्षों के पुष्पों से सुगन्धित, सत्य एवं ज्ञानमय नित्य सुन्दरलीला के स्थल, अतिदिव्य अलौकिक धाम श्रीवृन्दावन को प्राप्त कर विधिवत् प्रणाम कर

उसके अनुपम दिव्य दर्शन किया और अलौकिक अति अद्भुत अतिसुन्दर शोभा को बार-बार देखकर श्रीऋषिवर अरुण परम आश्चर्ययुक्त होकर मथुरापुरी में आ गये । यहाँ पर भी परम दिव्य रमणीय पुण्य स्थलों को अच्छी प्रकार दर्शन कर यमुना के सुन्दर तीर पर आकर विधिवत् आचमन एवं मार्जन कर बरसाना, नन्दगाँव, गोकुल आदि परम पवित्र स्थानों के भी मंगल दर्शनकरते हुए गिरिराज गोवर्धन के समीप आये । परिवार सहित महर्षि श्री अरुण ने मानसी गङ्गा में स्नान-आचमन कर श्री गिरिराज की परिक्रमा की। श्रीनियमानन्द ने तो परम प्रसन्न मन होकर महर्षि के साथ अपनी व्रज दर्शन सदिच्छा को एवं महनीय दिव्य मनोरथ को साङ्गोपाङ्ग पूर्ण किया । जयन्ती माता भी अपने सौभाग्य को धन्य-धन्य मानती हुई परमानन्द को प्राप्त हुई ।

**श्रीगोवर्धनोपत्यकासंस्थितमेकमत्यन्तरमणीयस्थलं समवेक्ष्य श्रीनियमानन्देन स्वपितृचरणसरोरुहेषु निवेदितं यदिदं स्थलमतीव-मङ्गलप्रदं नितान्तशान्तं पावनतमं परिलक्ष्यते । मयाऽतो 'यद्यत्रैव श्रीहरे-राराधना स्यात्तर्हि परमशोभनं शुभकरमि'त्यनुभूयते । स्वात्मजप्रोक्तोप-युक्तचारुतमनिवेदनं हृद्यवधार्य सम्यग्विविच्य ऋषिप्रवरोऽरुणस्तत्रैवैकं परमरमणीयं सुन्दरतममाश्रमं निर्माय सानन्दं सपरिकरं न्यवसत् ।**

श्रीगोवर्द्धन के समीप विद्यमान एक अत्यन्त रमणीय स्थान को देखकर श्रीनियमानन्द ने अपने पिताश्री के चरण कमलों में निवेदन किया कि यह स्थान अतीव मङ्गलकारी है । सर्वथा शान्त और परम पवित्र दिखाई देता है । अतः यदि यहाँ पर ही श्रीप्रभु की आराधना हो तो अति मङ्गलकारी एवं शुभ है, ऐसा अनुभव हो रहा है । अपने आत्मज नियमानन्द के उक्त उपयुक्त अति सुन्दर निवेदन को मन में धारण कर अच्छी प्रकार से विवेचन कर ऋषिवर श्रीअरुण ने वहीं पर एक अति रमणीय अति सुन्दर आश्रम का निर्माण करके आनन्दपूर्वक सपरिवार निवास किया ।

**श्रीसुदर्शनावतारः श्रीनियमानन्दो मनुजरूपेण व्रजधाम्नि बाल-लीलामाचरन् सतीर्थ्यैः सह निगमागमादिसच्छास्त्राणां स्वाध्यायेऽतीव-**

**तन्मयतया परमसंलग्न आसीत् । एकदा च तत्राऽऽराधनास्थले महतान्तरिक्षमार्गेण देवर्षिश्रीनारदवर्यो दिव्यवीणां वादयन् प्रभोर्महा-मङ्गलनामानि कलकण्ठेन मधुरस्वरेण समुच्चारयन्समुपस्थितवान् । श्रीदेवर्षेः परमश्रेयःप्रदं दिव्यदर्शनमवाप्य महर्षिवरश्रीमदरुणवर्योऽतीव-प्रमुदितो जातः ।**

श्रीसुदर्शनावतार श्रीनियमानन्द मानव रूप से व्रजधाम में बाल लीला को धारण करते हुए सहपाठी छात्रों के साथ वेद आगम आदि सत् शास्त्रों के स्वाध्याय में अत्यन्त तन्मयता से परम तल्लीन थे । एक दिन वहीं उपासना के स्थल पर आकाश मण्डल से देवर्षि श्रीनारदजी दिव्य वीणा का वादन करते हुए श्रीप्रभु के दिव्य महामंगलकारी नामों का कमनीय कण्ठ से मधुर स्वर से उच्चारण करते हुए पधारे । श्रीदेवर्षि नारद के परम कल्याणकारी दिव्य दर्शन प्राप्त कर महर्षिवर श्रीअरुण अत्यधिक प्रसन्न हुए ।

**किञ्चित्कालावधिकश्रीभगवच्चर्चानन्तरं श्रीमदरुणेन महर्षिणा निगदितं हे महर्षे ! भवदनुग्रहेणेह श्रीराधामुकुन्ददिव्यधाम्नि व्रजे सर्वविध-मनिर्वचनीयं परमानन्दमनुभवामि नितराम् । अद्याऽत्र भवत्पावनदर्शन-मुपलभ्य परमकृतार्थोऽहम् । भो देवर्षे ! महामहनीयदिव्याऽकम्पानुकम्पां विधाय भवदीयनियमानन्दाय वैष्णवीं दीक्षां प्रदाय वैष्णवधर्मस्या-ऽक्षुण्णपरम्परामभिरक्षत्विति भूयोभूयो मे निवेदनम् ।**

कुछ समय श्रीभगवत् चर्चा के पश्चात् श्रीमहर्षि अरुण ने कहा, हे देवर्षे ! भगवान् के अनुग्रह से श्रीराधामाधव के दिव्य धाम व्रज में सब प्रकार के अलौकिक परमानन्द का सदा अनुभव कर रहा हूँ । आज यहाँ पर मैं आपके पवित्र दर्शन प्राप्त कर परम कृतार्थ हुआ हूँ । भगवन् देवर्षिवर ! महामहनीय दिव्य अविचल कृपा कर आपश्री ही नियमानन्द को वैष्णवी दीक्षा प्रदान कर वैष्णव धर्म की स्थिर परम्परा की सर्वथा रक्षा करें, यह बारम्बार मेरा विनम्र निवेदन है ।

देवर्षिवर्योऽपि ऋषिभावनामवगम्य श्रीनियमानन्दाय श्रीमन्मुकुन्दशरणागतिमन्त्रस्य श्रीगोपालमन्त्रराजस्य च विधिवद्दीक्षां प्राददात् । मन्त्रदीक्षानन्तरं श्रीसनकादिमहर्षिसंसेवितगुञ्जाफलपरिमितं दक्षिणावर्तचक्राङ्कितं शालग्रामस्वरूपं श्रीसर्वेश्वरप्रभुं नित्याऽर्चार्थं सम्यक् प्रदाय श्रीराधाकृष्णपराभक्तितत्त्वज्ञानं समुपदिष्टवान् । वेद-वेदान्त-प्रतिपादितराद्धान्तातिगूढरहस्यस्याऽपि दिव्योपदेशं साधुतया विधाय पुनश्च परमकारुणिको देवर्षिवर्यस्ततो जिगमिषुरभवत्, किन्तु श्रीसर्वेश्वरशालग्रामस्वरूपमाहात्म्यजिज्ञासासमुत्सुकेन नियमानन्देन सम्प्रार्थितो देवर्षिनारदः पुनः प्रोवाच--

देवर्षि श्रीनारद ने भी महर्षि श्रीअरुण की भावना को जानकर श्री नियमानन्द को श्रीमन्मुकुन्द शरणागति मन्त्र और श्रीगोपाल मन्त्रराज की विधिपूर्वक दीक्षा प्रदान की । मन्त्र-दीक्षा के पश्चात् श्रीसनकादि महर्षि द्वारा संसेवित गुञ्जाफल के समान दक्षिणावर्त चक्र से अङ्कित शालग्राम स्वरूप श्रीसर्वेश्वर प्रभु को नित्य सेवा के लिए विधि-विधान से प्रदान किया तथा श्रीराधाकृष्ण की पराभक्ति के तत्त्व का उपदेश भी दिया । वेद-वेदान्त प्रतिपादित सिद्धान्त के अतिगूढ रहस्य का भी दिव्य उपदेश अच्छी प्रकार से प्रदान करने के पश्चात् परम दयालु देवर्षिवर श्रीनारदजी जाने की इच्छा करने लगे, किन्तु श्रीसर्वेश्वर शालग्राम के माहात्म्य की जिज्ञासा में उत्सुक हुए नियमानन्द द्वारा प्रार्थना करने पर देवर्षि श्रीनारद फिर बोले--

''एकदा सृष्टिकर्तुर्वेधसश्चत्वारो मानसपुत्राः श्रीसनकादिमहर्षयो बद्धाञ्जलयो धराधाम्नि पुष्करारण्ये श्रीब्रह्मणो नेदीयसि विनयावनत-पूर्वकमुपस्थाय परमगभीरतममेकं प्रश्नमुपस्थापितवन्तः--

एक बार सृष्टिकर्ता ब्रह्मा के चार मानस पुत्र श्रीसनकादि महर्षियों ने हाथ जोड़कर इस भू-मण्डल पर पुष्कर क्षेत्र में श्रीब्रह्माजी के समीप सविनय प्रणामपूर्वक उपस्थित होकर अत्यन्त गम्भीर एक प्रश्न प्रस्तुत किया था--

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो !
कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ।।
(श्रीमद्भा. स्क. ११ अ. १३ श्लो. १७ )

हे ब्रह्मदेव ! चित्तमिदं गुणेष्वर्थाज्जगद्विषयेषु समाविष्टमस्ति । गुणाश्चार्थाज्जगद्विषयाश्चित्तेष्वपि विद्यमानाः सन्ति । एवमुभावपि मिथः सम्मिलितौ वर्तेते, तर्हि कथमनन्तजगद्वारिधिमतितितीर्षोर्मुमुक्षोर्मोक्षप्राप्तिः स्यात्।

अयि ब्रह्मन् ! विविधविचित्रसंस्थानसम्पन्नं यावन्निखिलजगदिदं त्रिगुणात्मकं वरीवर्ति । एवं हि समस्तप्राणिचित्तमपि त्रिगुणात्मकमेव विद्यते। एतदुभयोरपि परस्परं सम्बन्धोऽस्ति चेत्कथं जगतश्चित्तस्याऽऽत्यन्तिकनिवृत्तिः स्यादित्यस्मदीयप्रश्नस्य सम्यक् समाधानं सानुग्रहं विदधात्विति सप्रश्रयं निवेदनम् ।

हे ब्रह्मदेव ! यह चित्त संसार के विषयों में समाविष्ट (आसक्त) है और सांसारिक विषय चित्त में सन्निविष्ट हैं । इस प्रकार दोनों (विषय और चित्त) परस्पर सम्मिलित हैं, तो संसार सागर से पार होने की इच्छा वाले मुमुक्षु को मोक्ष-प्राप्ति कैसे होगी ? हे ब्रह्मन् ! विविध विचित्रताओं से युक्त यह संसार त्रिगुणात्मक है । इन दोनों का भी परस्पर सम्बन्ध है, जो जगत् और चित्त की आत्यन्तिक निवृत्ति कैसे हो ? इस हमारे प्रश्न का समाधान अनुग्रहपूर्वक कीजिए, यह सविनय निवेदन है ।

श्रीसनकादिमहर्षिविनिवेदिताऽतिगूढतमप्रश्नं समाधातुमसमर्थेन वेधसा समाधिस्थमनसि भगवतः श्रीकृष्णस्य ध्यानमकारि । क्षणादेव किञ्चिद्दूरमेकं दिव्यप्रभायुतं परमाद्भुतं हंसस्वरूपं विलोक्य श्रीमत्सनक-सनन्दन-सनातन-सनत्कुमाराश्चत्वारो महर्षयो ब्रह्मदेवमग्रतो विधाय तत्सविधे समुपागताः ।

तत्राऽऽगत्य परमात्मतत्त्वजिज्ञासवो महर्षयो विधिवत्प्रणम्य को भवानिति प्रश्नं चक्रुः ।

श्रीसनकादि महर्षियों द्वारा निवेदित अति गम्भीर प्रश्न का समाधान करने में असमर्थ ब्रह्मा ने समाधि में स्थित मन से भगवान् श्रीकृष्ण का ध्यान किया । क्षणमात्र में ही कुछ दूर एक दिव्य प्रभा से युक्त परम अद्भुत हंस स्वरूप को देखकर श्रीसनक-सनन्दन-सनातन-सनत्कुमार चारों महर्षि ब्रह्मदेव को आगे करके उनके समीप गये । वहाँ आकर परमात्मतत्त्व की जिज्ञासा वाले महर्षियों ने विधिवत् प्रणाम करके 'आप कौन हैं ?' ऐसा प्रश्न किया ।

**श्रीमन्महर्षिवर्य्यैः श्रीसनकाद्यैर्जिज्ञासितेन श्रीहंसरूपेण भगवता हरिणा श्रीकृष्णेन निगदितं, तद्यथा--**

श्रीसनकादि महर्षियों द्वारा जिज्ञासा करने पर श्रीहंसस्वरूप भगवान् ने इस प्रकार कहा--

**पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ।**
**को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः ।।**

( श्रीमद्भा. स्क. ११ अ. १३ श्लो. २३ )

**सुर-नर-पशु-खग-कीट-पतङ्गादिनिखिलपञ्चभूतात्मकेषु भूतेषु समानेषु को भवानिति भवतां प्रश्न एव सर्वथाऽसमीचीनः केवलो वाग्विलासरूपात्मकोऽसङ्गतः ।**

देवता, मनुष्य, पशु, पक्षी, कीट, आदि समस्त पञ्चभूतात्मक भूत समान होने पर 'आप कौन हैं ?' यह आपका प्रश्न ही सर्वथा उपयुक्त नहीं है, केवल वाग्विलास मात्र एवं असङ्गत है ।

**मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।**
**अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ।।**

( श्रीमद्भा. स्क. ११ अ. १३ श्लो. २४ )

**मनोवाक्श्रोत्रनेत्रादीन्द्रियवृन्दैर्यत्किमपि गृह्यते तदहमेव मदन्यन्नैव किमपि वरीवर्तीति तत्त्वतोऽवधेयम् ।**

मन, वाणी, श्रोत्र, नेत्र आदि इन्द्रिय समूह से जो कुछ भी ग्रहण किया जाता है, वह मैं ही हूँ मेरे अतिरिक्त कुछ भी नहीं है, ऐसा तत्त्वतः

जानना चाहिए ।

**गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ।**
**जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ।।**

( श्रीमद्भा. स्क. ११ अ. १३ श्लो. २५ )

**विषयाश्चित्तेषु विलीयन्ते, इति याथातथ्यं, तथापि विषयास्तथा च चित्तं मदंशरूपजीवस्य तदुभयमपि देहस्वरूपभूतमर्यादात्मनश्चित्तेन सह विषयेण सार्द्धमपि कोऽपि सम्बन्धो नास्ति ।**

विषयचिन्तनपरायण चित्त विषयात्मक हो जाता है और विषय भी चित्त में विलीन हो जाते हैं, यह वास्तव में सत्य है तो भी विषय और चित्त मेरे अंश रूप जीव के दोनों ही देह स्वरूप हैं अर्थात् आत्मा (परमात्मा) का चित्त और विषयों के साथ कोई भी संबंध नहीं है अर्थात् मेरा उनके साथ कोई सम्बन्ध नहीं है ।

**श्रीहंसरूपेण परात्पररसपरब्रह्मणा सर्वेश्वरेण श्रीकृष्णेन भगवता श्रीसनकादिमहर्षयः समुपदिष्टाः । जिज्ञासितप्रश्नस्य सम्यक् समाधानं हृद्यवधार्य परमसन्तुष्टा अभवन् चत्वारो महर्षयः, प्रार्थितवन्तश्च भगवन्तं श्रीहंसं प्रति यदीत्थमेव सततं सुलभं भवद्दर्शनञ्चेत्तर्हि परमं वरीयः सौभाग्यमस्माकम् ।**

श्रीहंसरूप परात्पर रसपरब्रह्म श्रीसर्वेश्वर भगवान् के द्वारा श्रीसनकादि महर्षियों को उपदेश दिया गया । अपने अभीष्ट प्रश्न का अच्छी प्रकार समाधान हृदय में धारण कर चारों महर्षि परम सनतुष्ट हुए और हंस भगवान् से प्रार्थना करने लगे कि इसी प्रकार निरन्तर आपके दर्शन सुलभ हों तो हमारा परम सौभाग्य है ।

**भगवता श्रीहंसेन समादिष्टा बद्धाञ्जलयो महर्षयो यन्मदीय-स्वरूपात्मकशालग्रामस्वरूपो दक्षिणावर्तिचक्राङ्कितो गुञ्जाफलसमो दिव्यस्वरूपः सर्वेश्वराभिधानोऽधुनैव भवत्सेवार्थं सम्प्रदीयते, तन्निष्ठया शालग्रामस्वरूपः संसेव्यो नितरां तन्मयत्वेन । श्रीसनकादिमहर्षयोऽपि**

**श्रीहंसभगवतः शालग्रामस्वरूपं श्रीसर्वेश्वरप्रभुं सम्प्राप्य प्रमुदितमनस्काः सञ्जाताः । श्रीसनकादिजिज्ञासितप्रश्नस्य समाधानं विधाय श्रीसर्वेश्वरसेवाञ्च प्रदायाऽन्तर्दधौ भगवान्-श्रीमद्धंसः । श्रीसनकादिमहर्षयोऽपि वेधसा सह समुपागम्य लोक-लोकान्तरं विचरन्तो भगवदुपासनां समुपदिशन्तः श्रीसर्वेश्वरसमर्चनायां तन्मनस्का बभूवुः ।**

श्रीहंस भगवान् ने हाथ जोड़े हुए महर्षियों को आदेश दिया कि मेरा स्वरूपात्मक दक्षिणावर्ती शालग्राम गुञ्जाफल समान (आकृति) दिव्य स्वरूप श्रीसर्वेश्वर नामक दिव्य विग्रह अभी आपको सेवा के लिए प्रदान कर रहे हैं। उन शालग्राम स्वरूप की परम निष्ठा एवं तन्मयता के साथ निरन्तर सेवा करें । श्रीसनकादि महर्षि भी श्रीहंस भगवान् से शालग्राम स्वरूप श्रीसर्वेश्वर प्रभु को प्राप्त करके अति प्रसन्न एवं उल्लसित हुए । श्रीसनकादि महर्षियों के अभीष्ट प्रश्न का समाधान करके श्रीसर्वेश्वर प्रभु की सेवा प्रदान कर श्रीहंस भगवान् अन्तर्धान हो गये । श्रीसनकादि महर्षि भी ब्रह्माजी के साथ आकर लोक लोकान्तर में विचरण करते हुए भगवान् की उपासना का उपदेश देते हुए श्रीसर्वेश्वर प्रभु की सेवा में तल्लीन हुए ।

**यदैकदाऽहं देवर्षिनारदः श्रीसनकादिमहर्षिवर्य्याणां पुरत उपस्थाय श्रीहरिभक्तितत्त्वोपदेशमुपलभमान आसंस्तदा श्रीसर्वेश्वर-सेवामपि श्रीसनकादिमहर्षिभ्यः सम्प्रापम् । सैव श्रीसर्वेश्वरसेवेयं भवते प्रदीयते, समाहितचेतसा सावधानतया वेदविधिपूर्वकमियं सेवा सततं सम्पादनीया, तथा चाऽक्षुण्णरूपेण परम्परातः सेवेयं निश्चप्रचं सर्वदैव सञ्चलिष्यतीति नाऽत्र कोऽपि विचिकित्सावकाशः । अथाऽग्रे भवता प्रस्थानत्रयीमवाप्य तदुपरि भाष्यरचनाऽपि विधातव्या, यथाऽनया जगति सम्प्रदायपुरस्सरपरम्परा निर्बाधरूपेण सञ्चालिता प्रभवेदिति मदीया स्पृहाऽतितरां प्रपूरणीया तथा चाऽग्रे बालब्रह्मचारीरूपः परमपवित्रोच्चतमश्रेष्ठविप्रविरक्तः श्रीसनकादिसेवित-**

**सूक्ष्मात्मकदक्षिणावर्तिचक्राङ्कितशालग्रामस्वरूपसर्वेश्वरप्रभुनित्यसेवापरायण आचार्यपरम्पराप्राप्तसर्वेश्वरस्वरूपः परमाचार्यपरम्पराधिरूढ एवैकमात्रं जगद्गुरुनिम्बार्काचार्यो भाविपीठाचार्यपरम्परायां समुदेति मदीयवचन-मिदमवधेयम्। श्रीदेवर्षिणा श्रीनियमानन्दं प्रति विधिवदेवं समुपदिश्य वीणां रणयता नभसि त्वरितमेवाऽन्तर्हितम् ।**

एक बार जब मैं (देवर्षि नारद) श्रीसनकादि महर्षियों के श्रीचरणों में उपस्थित होकर श्रीभगवान् की भक्ति का तत्त्वोपदेश प्राप्त कर रहा था, तब श्रीसनकादि महर्षियों से श्रीसर्वेश्वर प्रभु की सेवा भी प्राप्त की । वही श्रीसर्वेश्वर प्रभु की सेवा आपको प्रदान की जा रही है । सावधान एवं दत्तचित्त होकर वेद विधिपूर्वक यह सेवा निरन्तर सम्पादित करें और अक्षुण्ण रूप से परम्परागत यह सेवा निश्चित रूप से सदा ही चलती रहेगी, इसमें किसी प्रकार की शङ्का नहीं है और आगे आप प्रस्थानत्रयी ( श्रीमद्भगवद्गीता, ब्रह्मसूत्र और उपनिषद् ) प्राप्त करके उस पर भाष्य की रचना भी करें, इस कार्य से संसार में सम्प्रदाय परम्परा अबाध रूप से सञ्चालित हो, ऐसी मेरी सद् अभिलाषा भी अवश्यमेव पूर्ण करें, तथा इसके आगे बालब्रह्मचारी रूप परमपवित्र उच्चतम अतीव श्रेष्ठ विप्र जो विरक्त रूप में हो एवं श्रीसनकादि सेवित अति सूक्ष्म रूप दक्षिणावर्ती चक्राङ्कित शालग्राम स्वरूप श्रीसर्वेश्वरप्रभु की नित्य सेवा में अभिरत हो और आचार्यपरम्परा से जिनको श्रीसर्वेश्वर प्रभु प्राप्त हैं तथा परम पावन आचार्यपीठ पर समासीन ही एकमात्र जगद्गुरु निम्बार्काचार्य आगे चलने वाली आचार्यपीठ की परम्परा में अक्षुण्ण रूप से सर्वमान्य होगा; इसमें किसी भी प्रकार का सन्देह नहीं है । इस मेरे कथन को सदा ध्यान में रखें । श्रीदेवर्षि नारद श्रीनियमानन्द को इस प्रकार विधिपूर्वक उपदेश प्रदान कर वीणा बजाते हुए शीघ्र ही आकाश में अन्तर्हित हो गये ।

**इतस्तु श्रीनारदोक्तविधिना श्रीसर्वेश्वरप्रभुसेवाऽभिरतः श्रीमन्नियमानन्दः । श्रीनियमानन्देन सम्पाद्यमानं श्रीसर्वेश्वरस्य वैदिकं समीचीनमर्चाविधिं संवीक्ष्य जयन्तीदेव्या सह श्रीमहर्षिवर्योऽरुणः**

परमानन्दमवाप ।

इधर श्रीनारदोक्त विधि से श्रीनियमानन्द श्रीसर्वेश्वर प्रभु की सेवा में तल्लीन हो गये । श्रीनियमानन्द के द्वारा आचरित श्रीसर्वेश्वर प्रभु की वैदिक उत्तम सेवा विधि को देख कर जयन्ती माता के साथ श्रीमहर्षिवर अरुण परम आनन्द को प्राप्त हुए ।

यद्यपि जगत्स्रष्टा विधाता सर्वं वेत्ति, तथापि लोकशिक्षार्थमबोधवल्लीलां विदधाति । एकदा ब्रह्मलोके दिव्यसिंहासनाऽऽसीनो ब्रह्मा समाधौ किञ्चिद्विशेषचिन्तनावस्थायां संतिष्ठमान आसीत्तदा मनसि संकल्पितं विधिना यत्सुदर्शनचक्रराजः श्रीहरिणा समादिष्टो मनुजरूपेण धराधाम्नि समवततार। अतस्तज्जिज्ञासार्थं परीक्षार्थञ्च छद्मरूपेण मया भूतले यातव्यमिति विनिश्चित्य तत्क्षणादेव व्रजधाम्नि गोवर्धनेऽरुणमहर्षितपोभूमौ सृष्टिकर्ता वेधा दण्डियतिरूपेण सूर्यास्तसमये समाजगाम ।

अकस्मान्नियमानन्दः सतीर्थ्यैः सह स्वाध्यायं प्रकुर्वाणो यतिदर्शनं विधाय मधुपर्कादिभिर्यथाविधि समागतस्य यतेः सम्यक् स्वागतं विहितवान्। यतिना जिज्ञासितं यद् भो वत्स ! किमियमेव महर्षिवर्यस्य श्रीमदरुणस्याऽऽराधनास्थली ? तेषामधुना दर्शनं सम्भाव्यते किम् ? श्रीनियमानन्देन प्रोक्तं--हे यतिवर्य ! मदीयपितृचरणाः महर्षिवर्याः सम्प्रति श्रीगिरिराजगोवर्धनस्य परिक्रमार्थं गतवन्तः । तदा यतिरुवाच तर्हि जिगमिषुरहम् । श्रीनियमानन्देन निवेदितं –हे यते ! यद्यपीदानीमत्राऽस्मत्पितृचरणा नैव विराजन्ते, तथापि मदीया जननीत्वत्रैव पर्णकुटीरे श्रीभगवत्कैङ्कर्यकर्मणि संलग्ना वर्तते, तथा चाऽश्रमस्थाः सर्वे वेदस्वाध्यायनिरता अन्तेवासिनो वयं विद्यमानाःस्मः, मङ्गलप्रदं च भवद्दर्शनमधिगम्य सर्वे परमकृतार्था जाताः । अत्र भवानिदमासनं समलङ्करोतु भगवत्प्रसादञ्च गृह्णातु । दिवाभोजी यतिरवदत्–भो वत्स ! सम्प्रति सूर्यास्तवेला सन्निकटा वरीवर्ति, सुतरामस्मद्भिक्षासमयो नास्ति।

यद्यपि जगत् के रचयिता ब्रह्मा सब जानते हैं तो भी लोक शिक्षा के लिए अनभिज्ञ रूप से मानवी लीला करते हैं । एक बार ब्रह्मा ब्रह्मलोक में दिव्य सिंहासन पर विराजमान होकर समाधि की स्थिति में विशेष चिन्तन परायण हो रहे थे तब मन में संकल्प किया कि भगवान् के आदेश से श्रीसुदर्शन चक्रराज मनुष्य रूप से पृथ्वी पर अवतरित हुए हैं । अतः यह जानने के लिए और परीक्षा के लिए छद्म रूप से मुझे भूतल पर जाना चाहिए, ऐसा निश्चय करके उसी क्षण व्रज धाम में गिरिराज के समीप महर्षि श्रीअरुण की तपोभूमि पर ब्रह्मा दण्डी यति के रूप में सूर्यास्त के समय में आये । श्रीनियमानन्द ने अपने सहपाठियों के साथ स्वाध्याय करते हुए सहसा यति के दर्शन करके मधुपर्कआदि से विधिपूर्वक आये हुए अतिथि का अच्छी प्रकार स्वागत किया । यति ने जानना चाहा कि हे वत्स ! क्या यही महर्षिवर श्रीअरुण की तपोभूमि है ? क्या इस समय उनका दर्शन सम्भव है ? श्रीनियमानन्द ने कहा- ये यतिवर ! मेरे पिता श्रीमहर्षि अरुण इस समय गिरिराज श्रीगोवर्धन की परिक्रमा के लिए गये हुए हैं । यतिराज ने कहा, तो मैं जाना चाहता हूँ । श्रीनियमानन्द ने निवेदन किया, हे यतिराज ! यद्यपि इस समय मेरे पिताश्री नहीं विराज रहे हैं तो भी मेरी माताश्री यहीं पर्णकुटी में श्री भगवान् की सेवा कार्य में संलग्न है और यहाँ रहने वाले समस्त वेद-स्वाध्याय में संलग्न हम छात्र विद्यमान हैं । आपके मङ्गलकारी दर्शन प्राप्त करके हम सब अतीव कृतार्थ हुए हैं । यहाँ आप इस आसन पर विराजिए और भगवत् प्रसाद ग्रहण कीजिए । दिवाभोजी यति बोले, हे बालक ! अभी सूर्यास्त का समय अतीव निकट है, हमारे भिक्षा का समय अब नहीं है ।

**श्रीमन्नियमानन्देन स्वकीयमूलस्वरूपं कोटिसूर्यसमप्रभं सुदर्शनायुधं प्रकटीकृत्य स्वाश्रमस्थे निम्बद्रुमे सूर्यवत्स्वरूपाकृतिं दर्शयित्वा यतिरूपो ब्रह्मा निजकरकञ्जाङ्गुल्या निर्देशेन सम्बोधितो हे यते ! नैवाऽधुना सन्ध्यावेलाऽस्ति दिवाकरस्य प्रत्यक्षदर्शनं सञ्जायतेऽतोऽस्माकं निवेदनमिदमुररीक्रियताम् । यतिरपि परमसन्तुष्टीभूय**

**श्रीभगवन्निवेदितं भगवत्प्रसादं सानन्दं पुलकितचेतसा प्रगृहीतवान् । भगवत्प्रसादान्ते यदाऽऽचमनं यतिरूपेण विधिना विहितं, तदा हठादेव गाढध्वान्तयुता महानिशा विलोकिता ।**

श्रीनियमानन्द ने अपने वास्तविक स्वरूप करोड़ों सूर्यों के समान प्रभा वाले सुदर्शन चक्र को प्रकट करके अपने आश्रम में स्थित निम्ब वृक्ष में सूर्य के समान आकृति दिखा कर यति रूप ब्रह्मा को अपने करकमल की अङ्गुलि के निर्देश से सम्बोधित किया--हे यते ! इस समय सन्ध्या वेला नहीं है । भगवान् भास्कर का प्रत्यक्ष दर्शन हो रहा है, अतः हमारे निवदेन को स्वीकार कीजिए यति भी परम सन्तुष्ट होकर भगवान् के निवेदित प्रसाद को आनन्द पूर्वक परम प्रसन्न चित्त होकर ग्रहण किया । भगवत्प्रसाद के अनन्तर जब यति रूप ब्रह्मा ने आचमन किया, तब सहसा गाढ़ अन्धकार युक्त रात्रि देखी ।

**अहो क्षणमात्राऽनन्तरमेव मयेयं तिमिराऽऽछन्ना रात्रिर्विलोक्यते । वर्तमाने भास्करेऽकस्मात्कथमन्धकारपूर्णा तमिस्रेयं संदृश्यते, यतिस्वरूपेण वेधसा समाधौ विचिन्तितं यद्ध्रुवमेव श्रीहरिकरारविन्दाङ्गुलिनित्यसुशोभिनः श्रीसुदर्शनचक्रराजस्यैवाऽवतारो नियमानन्दोऽयं बालस्वरूपो महर्षिवर्यश्रीमदरुणात्मजः श्रीप्रभुप्रेरितो धरित्र्यां नृस्वरूपमाकलय्यैवाऽवतीर्णवान् । कथमहं वृथैव व्यामुग्ध इति मनसि सम्यग्विविच्य यतिस्वरूपमपहाय चतुर्मुखो विरञ्चिर्ब्रह्मा स्वस्वरूपेण झटित्येव तत्राऽऽविर्बभूव । हे चक्रराज ! सृष्टिकर्ता विधिरहं केवलं भवत्परीक्षणार्थं छद्मरूपेणेहाऽऽगतः । सर्वेश्वरपरब्रह्मणा श्रीकृष्णभगवता सम्प्रेरितो जगत्कल्याणायाऽनादिवैदिकसनातनवैष्णवधर्माऽभ्युत्त्थानार्थं नैशाचरीवृत्तिपरिशमनार्थञ्च ऋषिमुनिवृन्दारकवृन्दसम्प्रार्थितो भवानिह भूतले मनुजरूपेण वैष्णवाचार्यस्वरूपेण परमानुकम्पापूर्वकमवतीर्णवान् । नाऽत्र कोऽपि सन्देहावसरः । भवदीयाऽऽश्रमे समायाते मयि भवता यदातिथ्यं**

सम्पादितं, तदत्यद्भुतं परमं विचित्रं, तद्वर्णने सर्वथाऽसमर्थोऽहम्। ममाऽधुना स्वान्ते कियान् हर्षः समुदेति तदप्यतीव चित्रमाभाति। यदा भवता निम्बद्रुमेऽस्तंगते मरीचिमालिनि भगवति भुवनभास्करे पुनरेवाऽर्कस्य दिव्यदर्शनमकारि, तच्चमत्कृतिपूर्णमतीवमहनीयं भवद्वैभवम्। निम्बतरुवरेऽर्कः प्रदर्शितोऽतो भवान्निम्बार्कस्वरूप एव। अद्यत्वे मया भवान्निम्बार्कनाम्ना सम्बोध्यते । निखिलेऽस्मिन्विश्वब्रह्माण्डे निम्बार्काऽभिधानेनैव भवतो लोकप्रसिद्धिः प्रभविष्यतीति निश्चप्रचम् । तथा च जगत्यां चतुर्दिक्षु भवतो नाम्ना सम्प्रदायख्यातिः प्रसृता भृशमेव भवेदिति श्रीहरेः प्रेरणया मे द्रढीयो वचः । एवं स्वकीयं दिव्यवचनं विनिवेद्याऽन्तर्दधौ जगद्रचयिता जगत्पिता श्रीब्रह्मा ।

श्रीनियमानन्दो वेधसा सम्बोधितो निम्बार्कनाम्नैव परमप्रख्यातोऽभवत् । सृष्टिकर्त्रा विधिना निर्दिष्टो देवर्षिवर्येण श्रीमन्नारदेन च समादिष्टः श्रीनिम्बार्कभगवान् ब्रह्मसूत्रोपनिषद्गीतात्मिकां प्रस्थानत्रयीमादाय तदुपरि परमदिव्यभाष्यप्रणयने संलग्नो जातः । तदनन्तरं स्वल्पसमयावधावेव श्रीनिम्बार्कभगवता तदुपरि परमोत्कृष्टतमाऽनिर्वचनीया भाष्यरचना व्यधायि। तत्र **'वेदान्तपारिजातसौरभ'** मित्याख्यं वृत्यात्मकं ब्रह्मसूत्रभाष्यं परमं विख्यातं जातम् । अथाग्रे **'दशश्लोकीवेदान्तकामधेनुः' 'मन्त्ररहस्य-षोडशी' 'प्रपन्नकल्पवल्ली' 'श्रीकृष्णप्रातःस्तवराजः' 'श्रीराधाष्टक-स्तोत्रम्' 'प्रपत्तिचिन्तामणिः' 'सदाचारप्रकाशः' 'गीतावाक्यार्थः'** इत्यादिविविधग्रन्थानां रुचिरतमा रचनाऽपि सम्पादिता । 'प्रपत्तिचिन्तामणिः' 'सदाचारप्रकाशः' 'गीतावाक्यार्थः' इत्येते त्रयो ग्रन्था अस्माकं दौर्भाग्यात्साम्प्रतं नोपलभ्यन्ते। पूर्वाचार्यप्रणीतेषु पुरातनग्रन्थेषूक्तग्रन्थानां नामनिर्देशेनेदमवगम्यते।

आश्चर्य है, क्षणमात्र में ही मैं यह अन्धकार युक्त रात्रि देख रहा हूँ। भगवान् भास्कर ( सूर्य ) के होते हुए भी सहसा यह अन्धकार पूर्ण रात्रि कैसे दिखाई दे रही है ? यति स्वरूप ब्रह्मा ने समाधि लगाकर चिन्तन किया कि-

निश्चित ही भगवान् के कर कमल की अङ्गुलियों में शोभायमान श्रीचक्रराज सुदर्शन का अवतार यही बालक नियमानन्द महर्षिवर अरुण का पुत्र श्रीप्रभु की प्रेरणा से भू-मण्डल पर मनुष्य का रूप धारण करके अवतीर्ण हुआ है। क्योंकि मैं व्यर्थ ही व्यामोह को प्राप्त हुआ, ऐसा मन में अच्छी प्रकार विचार कर यति स्वरूप का परित्याग करके शीघ्र ही ब्रह्मा अपने स्वरूप से चतुर्मुख होकर प्रकट हुए।

हे चक्रराज ! मैं जगत् स्रष्टा ब्रह्मा आपकी परीक्षा के लिए कृत्रिम यति रूप धारण कर यहाँ आया हूँ। श्रीसर्वेश्वर परब्रह्म श्रीकृष्ण भगवान् की प्रेरणा से संसार के कल्याण के लिए, अनादि वैदिक सनातन वैष्णव धर्म के उत्थान के लिए और राक्षसी वृत्ति के शमन के लिए, देवगण तथा ऋषि मुनियों की प्रार्थना से आप इस भूतल पर मनुष्य रूप में वैष्णवाचार्य स्वरूप से परमानुकम्पापूर्वक अवतीर्ण हुए हैं, इसमें किसी प्रकार भी सन्देह नहीं है। आपके आश्रम में मेरे आने पर आपने जो आतिथ्य किया, वह अत्यन्त अद्भुत और बड़ा ही विचित्र है, उसका वर्णन करने में मैं सर्वथा असमर्थ हूँ। इस समय मेरे अन्तःकरण में जो हर्ष का प्रादुर्भाव हो रहा है, उसका भी बड़ा ही विचित्र अनुभव हो रहा है। जब आपने किरणरूपी माला वाले भगवान् भास्कर ( सूर्य ) के अस्त होने पर निम्बवृक्ष में पुनः सूर्य के दिव्य दर्शन कराये, वह चमत्कारपूर्ण अतीव महत्वपूर्ण आपका वैभव है। आपने निम्ब वृक्ष में अर्क दिखाया, अतः आप निम्बार्क रूप ही हैं। आज मैं आपको निम्बार्क नाम से सम्बोधित करता हूँ। इस समस्त संसार में निम्बार्क नाम से ही आपकी लोक प्रसिद्धि होगी, यह सर्वथा निश्चित है और संसार में चारों दिशाओं में आपके नाम से सम्प्रदाय की ख्याति का प्रसार बहुत ही होगा, ऐसा भगवान् की प्रेरणा से मेरा दृढ़ विश्वास है। इस प्रकार अपना दिव्य वचन निवेदन करके संसार के रचयिता जगत्पिता ब्रह्मा अन्तर्हित हो गये। ब्रह्मा के द्वारा सम्बोधित नियमानन्द निम्बार्क नाम से ही परम विख्यात हुए। जगत् के रचयिता ब्रह्मा के द्वारा निर्दिष्ट देवर्षिवर श्रीनारदजी के आदेश से

निम्बार्क भगवान् ब्रह्मसूत्र उपनिषद् गीता रूप प्रस्थान त्रयी को लेकर उस पर परम दिव्य भाष्य की रचना करने में संलग्न हुए । कुछ समय के पश्चात् अल्प समय में ही श्रीनिम्बार्क भगवान् ने प्रस्थानत्रयी पर अत्यन्त श्रेष्ठ अनिवर्चनीय भाष्य की रचना की । वहीं पर 'वेदान्त पारिजात सौरभ' इस नाम का वृत्यात्मक ब्रह्मसूत्र का यह भाष्य परम विख्यात हुआ । इसके पश्चात् 'दशश्लोकी वेदान्त कामधेनु' 'मन्त्ररहस्य षोडशी' 'प्रपन्नकल्प वल्ली' 'श्रीकृष्ण प्रातःस्तव-राजः' 'श्रीराधाष्टक स्तोत्र' 'प्रपत्ति चिन्तामणि' 'सदाचार प्रकाश' 'गीता वाक्यार्थ' इत्यादि विविध ग्रन्थों की अति सुन्दर रचना भी की । 'प्रपत्ति-चिन्तामणिः' 'सदाचार-प्रकाशः' 'गीता-वाक्यार्थः ये तीनों ग्रन्थ हमारे दुर्भाग्य से इस समय उपलब्ध नहीं हैं । पूर्वाचार्यों के प्रणीत प्राचीन ग्रन्थों में उक्त ग्रन्थों के नाम निर्देश से यह बात अवगत होती है ।

एकस्मिन्दिने गोवर्धनसकाशेऽरुणाश्रमे ग्रीष्मकालेऽरुणोदयावसरे प्रभाते जगद्गुरवः श्रीभगवन्निम्बार्काचार्यपादा उदुम्बरपादपतले यदा श्रीराधाकृष्णोपासनायामवस्थिता आसंस्तदा कश्चि**द्विद्यानिधिरि**ति नाम्ना सुविख्यातः पण्डितप्रवरो विद्वत्समूहेन सह हठादेव तत्राऽऽजगाम । श्रीसर्वेश्वरध्याननिरतान् श्रीमदाचार्यचरणान्विलोक्य तारस्वरेण न्यगदत्– महाभाग! समस्तजगतप्रख्यातोऽहं जगद्विजयी प्रकाण्डपण्डितः शास्त्रार्थचिकीर्षया समुपस्थितोऽस्मि । मया कर्णपरम्परया श्रुतं यद्भवानपि परमविरक्तो वैष्णवाचार्यस्वरूपो महामनीषी वर्तते, तथा चेदमपि श्रूयते यद्भवता शाक्तमतखण्डनं विधीयते । किमेतत्सत्यमस्ति चेत्तावद् द्रागेव मया सार्द्धं शास्त्रार्थो विधीयताम् । कथं मौनमाकलयति भवान्, प्रतीयते न किमप्यवगच्छति, किं बिभेति, सुस्पष्टं विज्ञायते यद्ध्यानस्य छद्मसमाधेश्च व्याजेन मूकरूपेण वृथैवाऽवतिष्ठते, आहोस्विद् बधिरोस्ति किम् ? न श्रूयते नैव किमपि निगदति । प्रत्यक्षमिदं याथातथ्येन मयाऽनुभूयते यदेतत्सर्वं ते कृत्रिमात्मकं कृत्यमस्ति । सुतरां

**त्वरितमेव लेखनीमादाय पराजयस्य स्वकीयहस्ताक्षरपूर्वकमालेखमेकं विलिखतु, नाऽत्र मनागपि विलम्बो विधेयः।''**

एक दिन गिरिराज गोवर्द्धन के सन्निकट अरुण आश्रम में ग्रीष्मकाल में अरुणोदय के समय प्रातःकाल जगद्गुरु श्रीनिम्बार्काचार्यचरण उदुम्बर (गूलर) वृक्ष के नीचे जब भगवान् श्री राधाकृष्ण की उपासना में विराजमान थे, तब कोई विद्यानिधि नामक प्रख्यात पण्डितप्रवर विद्वानों के समूह के साथ सहसा वहाँ आये । श्रीसर्वेश्वर प्रभु के ध्यान में संलग्न श्रीआचार्यचरणों को देखकर तेज स्वर से बोले कि, हे महाभाग ! समस्त संसार में विख्यात जगद्विजयी प्रकाण्ड पण्डित मैं शास्त्रार्थ करने की इच्छा से उपस्थित हुआ हूँ। मैंने कर्णपरम्परा से सुना है कि आप भी परम विरक्त वैष्णवाचार्य स्वरूप बड़े विद्वान् हैं और यह भी सुना है कि आप शाक्त मत का खण्डन करते हैं । यदि यह सत्य है तो शीघ्र ही मेरे साथ शास्त्रार्थ कीजिए । आप मौन कैसे धारण कर रहे हैं ? प्रतीत होता है कि आप कुछ भी नहीं जानते हैं । क्या भयभीत हो ? स्पष्ट ही अवगत होता है कि ध्यान और कृत्रिम समाधि के बहाने से मूक होकर व्यर्थ ही बैठे हो अथवा बधिर हो, क्या सुनते नहीं हो ? कुछ भी नहीं बोलते हो । मैं प्रत्यक्ष रूप से यथार्थ अनुभव करता हूँ कि यह सब आपका कृत्रिम कार्य है । शीघ्र ही लेखनी लेकर अपने हस्ताक्षरपूर्वक पराजय का एक लेख लिखदें । इस विषय में थोड़ा सा भी विलम्ब न करें ।

**किञ्चित्क्षणानन्तरं श्रीभगवन्निम्बार्काचार्यचरणाः स्वाराध्यध्यानोपासनां सम्पाद्य निगदितवन्तो यद्भो विद्वन् ! समागम्यतामासनमिदमभिगृह्णातु भवान् । भवद्दर्शनमवाप्याऽतीवपुलकितोऽस्मि ! अत्राऽश्रमवासिनः समेऽपि प्रमुदिताः सञ्जाताः, प्रेक्षावतां दर्शनं सर्वदैव पुण्यकरं भवति । निर्दिशतु काऽप्यपेक्षा चेत्किमभिवाञ्छति भवान् ।**

कुछ ही क्षणों के पश्चात् भगवान् श्रीनिम्बार्काचार्यचरण अपने आराध्य का ध्यान एवं उपासना पूर्ण करके बोले कि हे विद्वन् ! आइए आप यह आसन ग्रहण कीजिये । आपका दर्शन प्राप्त करके मैं अतीव हर्षित हूं ।

यहाँ समस्त आश्रमवासी भी अति प्रसन्न हुए हैं । विद्वानों के दर्शन सदा ही पुण्य बढ़ाने वाले होते हैं । यदि कोई आपकी अपेक्षा हो तो कहिए, आप क्या चाहते हैं ?

**विद्यानिधिः**–**मया कर्णाकर्णिकयाऽऽकर्णितमेतद्यद् भवान्वैष्णवधर्मस्य प्रचारार्थं विचरति, तथा च शाक्तमतस्य खण्डनं प्रकुरुते। मयाऽत्र विजिज्ञास्यते यद्वैष्णवधर्मस्य किमधिकं वैशिष्ट्यं प्रतीयतेऽथ च शाक्तमते का विप्रतिपत्तिर्विज्ञायते, तदत्र तूर्णमेव समाधानं विदधातु । शास्त्रार्थहेतोरेवेहाऽहमागतः । क्षिप्रमेव शास्त्रार्थः समारभ्यताम् ।**

विद्यानिधि बोला, मैंने कर्णपरम्परा से सुना है कि आप वैष्णव धर्म के प्रचार के लिए विचरण करते हैं और शाक्त मत का खण्डन करते हैं । मैं इस विषय में जानना चाहता हूँ कि वैष्णव धर्म की ऐसी क्या विशेषता प्रतीत होती है और शाक्त मत में क्या दोष पाते हैं । उसका सही शीघ्र ही समाधान करें । शास्त्रार्थ के लिए ही मैं यहाँ आया हूँ । शीघ्र ही शास्त्रार्थ प्रारम्भ करें।

**एवं सञ्चलिते वार्तालापेऽकस्मादुदुम्बरद्रुमात्फलमेकं श्रीनिम्बार्कभगवतः पुरत एव धरायां न्यपतत्तथा च श्रीमच्चरणकमलाङ्गुष्ठस्पर्शमात्रेण निपतितफलस्य भागद्वयं सञ्जातम् । भग्नफलमध्यभागादेकः परमतेजोमयोऽतिशयदिव्यस्वरूप औदुम्बराचार्याऽभिधानः ऋषिरूपो महात्माऽऽत्मानं प्रकटितवान् । श्रीमदौदुम्बराचार्यवर्यो सत्वरमेव श्रीनिम्बार्कभगवतः पादाम्बुजयोर्विधिवत्साष्टाङ्गदण्डवत्प्रणामं संविधाय सविधे समवस्थितं समागतं शास्त्रार्थाभिलाषिणं पण्डितंमन्यं प्रति प्रावदत् श्रीऔदुम्बराचार्यः–किमभिलषति ? का जिज्ञासाऽस्ति ? सपदि प्रवदतु भवान् ।**

**विद्यानिधिः–वेदपुराणादिशास्त्रप्रतिपादिते परमप्राचीनतमे शाक्तेमते विद्यमाने वैष्णवधर्मस्य सर्वथैवाऽनावश्यकता प्रतीयते, सुतरां कथं तदा भवता वैष्णवतायाः प्रचारः सम्पाद्यते ? त्वरितमेवास्य शास्त्रानुकूलं समाधानं विधीयताम् ।**

इस प्रकार वार्तालाप चलाने पर सहसा उदुम्बर (गूलर) के वृक्ष से एक फल श्रीनिम्बार्क भगवान् के सामने ही पृथ्वी पर गिरा और आचार्यचरण कमलों के अंगुष्ठ के स्पर्शमात्र से ही गिरे हुए फल के दो भाग हो गये । भग्न हुए फल के मध्य भाग से एक परम तेजस्वी अति दिव्य स्वरूप औदुम्बराचार्य नामक ऋषिरूप महात्मा ने अपने को प्रकट किया । श्रीऔदुम्बराचार्य ने शीघ्र ही श्रीनिम्बार्काचार्य भगवान् के चरणकमलों में विधिवत् प्रणाम करके समीप में बैठे हुए आये हुए शास्त्रार्थ की अभिलाषा वाले अपने को पण्डित मानने वाले ( विद्यानिधि ) को पूछा, क्या चाहते हो ? क्या जानना चाहते हो ? आप शीघ्र ही कहिए । विद्यानिधि बोला, वेद-पुराण शास्त्र-प्रतिपादित अति प्राचीन शाक्त मत के विद्यमान होते हुए वैष्णव धर्म की कोई आवश्यकता प्रतीत नहीं होती, तो आप वैष्णवता का प्रचार क्यों करते हैं ? शीघ्र ही इसका शास्त्रानुकूल समाधान कीजिए ।

**श्रीऔदुम्बराचार्यः – अहो प्रकाण्डपण्डितराज ! 'अधीत्य शास्त्राणि भवन्ति मूर्खाः' इति लोकोक्तिरियं विश्वविख्याताऽस्ति । श्रुति-स्मृति-सूत्र-तन्त्र-पुराणादियावन्निखिलशास्त्रेषु विपुलरूपेण वैष्णव-तायाः कियत्यद्भुता विशिष्टता प्रतिपादिता वरीवर्ति, तत्र भवता किमपि नाऽवगम्यते । अहो परमहास्यास्पदोऽयं प्रसङ्गो वैचित्र्यमाभाति ।**

औदुम्बरराचार्य बोले, अयि प्रकाण्ड पण्डित ! शास्त्र पढ़ करके भी मूर्ख होते हैं, यह लोकोक्ति लोक में प्रसिद्ध है । वेद, स्मृति, सूत्र, तन्त्र, पुराण आदि समस्त शास्त्रों में वैष्णव धर्म की विस्तार से कितनी अद्भुत विशेषता प्रतिपादित है तो आप कुछ भी नहीं जानते हैं, आश्चर्य है, यह प्रसङ्ग परम हास्यास्पद और विचित्र है ।

**अतीवचमत्कृतिपूर्णं महाविस्मयावहं श्रीमदौदुम्बराचार्यस्याऽति-विलक्षणं देदीप्यमानं दर्शनं विधाय तेषाञ्च शास्त्रसम्मतां परमौजस्विनीं गभीरार्थभरितां दिव्यां वाणीं समाकर्ण्य तथा च श्रीसुदर्शनायुधावतारस्य भगवतः श्रीमन्निम्बार्काचार्यस्य श्रीमस्तकपृष्ठभागे तीव्रगत्या परिभ्रमन्तं**

**कोटिसूर्यसमप्रभं श्रीसुदर्शनचक्रराजं दर्शं-दर्शं महापण्डितराजो विद्यानिधिः परमविस्मयान्वितो जातः । शास्त्रार्थं दूरत एव संत्यज्य विद्यानिधिः श्रीनिम्बार्कभगवतो विमलपदाम्भोजयुग्मं निजकराभ्यां प्रगृह्य शिरसा संस्पृश्य साष्टाङ्गदण्डवत्प्रणामपूर्वकं भूमौ विलुठ्य सविनयं क्षमामयाचत । अथ चाऽतितरां विनम्रीभूय निवेदितवान्--**

अत्यन्त चमत्कारपूर्ण अति आश्चर्यकारी श्रीऔदुम्बराचार्य के अति विलक्षण तेजस्वी दर्शन कर और उनकी शास्त्र सम्मत परम ओजस्विनी गम्भीर अर्थ भरी हुई दिव्य वाणी को सुनकर और श्रीसुदर्शन चक्रावतार भगवान् श्रीनिम्बार्काचार्य के श्रीमस्तक के पृष्ठ भाग में तेज गति से घूमते हुए करोड़ों सूर्यों के समान कान्तिवाले श्रीसुदर्शन चक्रराज को बारम्बार देख कर महा-पण्डित विद्यानिधि आश्चर्य युक्त हुए । शास्त्रार्थ को दूर से त्याग कर विद्यानिधि श्रीनिम्बार्क भगवान् के निर्मल चरण कमलों को अपने दोनों हाथों से पकड़ कर मस्तक से स्पर्श करते हुए साष्टाङ्ग दण्डवत् पूर्वक भूमि पर लोटते हुए विनयपूर्वक क्षमा मांगने लगे और अत्यन्त विनम्र होकर निवेदन करने लगे ।

**विद्यानिधिः --हेश्रीमदाचार्यवर्य ! मया भवतामलौकिकं दिव्य-स्वरूपं नाऽवगतमतो हि व्यर्थमेव शास्त्रार्थं कर्तुं महती धृष्टता व्यधायि तदर्थं बारम्बारं क्षमां याचे । सम्प्रति भवच्चरणकंजचञ्चरीको दासानुदासो-ऽहं शरणागतः । कृपानिधे ! वैष्णवपञ्चसंस्कारपूर्वकं श्रीमन्त्रराजदीक्षो-पदेशार्थञ्च सश्रद्धं बद्धपाणिः सम्प्रार्थयामि यत्कृपाकादम्बिनीसुधाभिव-र्षणसीकरैरभिषिञ्चन्तु श्रीमदाचार्यवर्यमहाभागाः ! ।**

विद्यिानिधि - श्रीमन् आचार्यप्रवर ! मैंने आपके अलौकिक दिव्य स्वरूप को नहीं जाना, इसलिए व्यर्थ ही शास्त्रार्थ के लिए धृष्टता की है, उसके लिए बार-बार क्षमा याचना करता हूँ । इस समय आपके चरणकमल का भ्रमर, दासानुदास मैं शरणागत हो गया हूँ । हे कृपा के सागर ! वैष्णव पञ्च संस्कारपूर्ण श्रीमन्त्रराज दीक्षा के उपदेश के लिए श्रद्धापूर्वक हाथ ज़ोड़कर

प्रार्थना करता हूँ कि आप श्रीकृपारूपी कादम्बिनी ( मेघमाला ) की अमृत वर्षा सीकरों ( बून्दों ) से अभिषिञ्चन करे ।

**परमकरुणावरुणालया अनुग्रहविग्रहस्वरूपा निर्मलान्तःकरणाः श्रीमन्निम्बार्काचार्यभगवत्पादा अपि शरणागताय विद्वन्मूर्द्धन्याय विद्यानिधये क्षमादानं विधाय श्रीनारदपञ्चरात्रोक्त-श्रीमुन्मुकुन्दशरणागतिमन्त्रस्य श्रीगोपालतापिन्युपनिषदुक्तपञ्चपदीविद्यात्मकस्य श्रीगोपालमन्त्रराजस्य च वैदिकवैष्णवविधिपूर्वकं दिव्यदीक्षादानञ्च सम्पादितवन्तः ।**

परम दया के सागर, अनुग्रह-विग्रह स्वरूप, पवित्र अन्तःकरण वाले श्रीनिम्बार्काचार्यचरण भी शरणागत विद्वान् शिरोमणि विद्यानिधि को क्षमा प्रदान कर श्रीनारदपञ्चरात्रोक्त श्रीमुकुन्दशरणागति मन्त्र और 'गोपाल तापिनी उपनिषद्' प्रोक्त पञ्चपदी विद्यारूप गोपाल मन्त्रराज की वैदिक वैष्णव दिव्य दीक्षा प्रदान का कार्य विधिपूर्वक सम्पन्न किया ।

**भारतवर्षस्य चतुर्दिक्षु तीर्थयात्रायां सशिष्याः श्रीमन्निम्बार्कभगवन्तो यदा गता आसंस्तस्मिन्नवसरे कस्यचिद्ग्रामविशेषस्य सकाशे चैकस्मिन्नरण्यप्रदेशे स्वाराध्याऽऽराधने तन्मनस्काः स्वकाऽऽसनं समलङ्कुर्वाणा बभूवुः । श्रीमच्चरणशिष्या अपि निज-निज कर्मण्यपि कियद्दूरमेव संलग्ना आसंस्तदा केचन वैष्णवताविरुद्धाऽऽचरणपरायणाः कृषिकार्यनिरता ग्राम्यजीवनयापनपरा वराकास्तत्राऽऽव्रजन् । श्रीराधासर्वेश्वरयुगलपदपङ्कजचिन्तनतल्लीनमाचार्यवर्यं श्रीमन्निम्बार्कं विलोक्य एकत्रीभूय च परस्परं चर्चां चक्रुः । चर्चाप्रसङ्गे चैकेन भणितं, भो ! साधुवेषधारीजनोऽयं तान्त्रिकः प्रतीयते, तन्त्रप्रयोगेणाऽयमस्माकं क्षेत्रे जायमानमन्नराशिं भस्मसात्करिष्यतीति द्रढीयोऽस्मन्मतम् । अतस्तावदिमं परितो वह्निप्रयोगो विधातव्यो येनाऽयं भस्मीभूय पञ्चत्वमवाप्स्यतीति नाऽत्र सन्देहः । एवंविधमेतन्निर्णयं समाकर्ण्य पुलकितमानसाः सर्वे प्रोचुरेकस्वरेण शोभनं शोभनं त्वरितमेव कार्यमिदं सम्पादनीयं, येन तान्त्रिकस्याऽस्य प्रशमनं ध्रुवमेव ।**

भारतवर्ष के चारों दिशाओं में तीर्थ यात्रा के लिए जब श्रीनिम्बार्क भगवान् शिष्यों सहित गये हुए थे, उस समय किसी एक ग्राम के पास एक वन में अपने आराध्य की उपासना में तन्मय होकर अपने आसन पर विराजमान थे और आपश्री के शिष्य भी अपने अपने कर्म में समीप में ही संलग्न थे, तब कुछ वैष्णवता के विरुद्ध आचरण करते हुए कृषि कार्य करने वाले ग्राम्य जीवनयापन करने वाले ग्रामीण लोग वहाँ आये । श्रीराधासर्वेश्वर के युगल चरणारविन्द चिन्तन में तल्लीन आचार्यप्रवर श्रीनिम्बार्क भगवान् को देखकर एकत्र होकर परस्पर चर्चा कर रहे थे । चर्चा के प्रसङ्ग में एक ने कहा, अरे ! साधु वेष धारण करने वाला यह कोई तान्त्रिक प्रतीत होता है । तन्त्र प्रयोग से यह हमारे खेत में उत्पन्न होने वाले अन्न को भस्म कर देगा, ऐसा मेरा दृढ़ मत है । अतः इसके चारों ओर अग्नि का प्रयोग करना चाहिए, जिससे यह भस्म होकर समाप्त हो जायेगा, इसमें कोई सन्देह नहीं है । इस प्रकार इस निर्णय को सुनकर प्रसन्न मन होकर सब एक स्वर से बोले, बहुत अच्छा है, शीघ्र ही यह कार्य करना चाहिए, जिससे इस तान्त्रिक का निश्चित रूप से विनाश हो जायेगा ।

**एवं विनिश्चित्य समे मिथो मिलित्वा श्रीनिम्बार्कभगवन्तं परित आवर्ताकाररूपेणाऽनलप्रयोगं कृतवन्तः । क्षणमात्रेणैव कृशानुर्भीषण-रूपेण तत्राऽऽविर्बभूव । तदानीं सर्वान्तिर्यामी सर्वज्ञः सर्वेश्वरः श्रीकृष्णः पद्मनाभस्वरूपेण भगवता झटिति तत्र प्रकटीभूय स्वीयकरारविन्देन संकल्पादेव प्रभूताऽनभ्रा जलवृष्टिर्विहिताययाऽविलम्बेनैव प्रज्वलि-तवह्निस्तु परमशीतलतामगात् । अभूतपूर्वं विचित्रचमत्कृतिपूर्णं दृश्यमिदं दृष्ट्वाऽविवेकिन उपद्रवपरायणाः सर्वे ग्रामीणाः परमविस्मयान्विताः सञ्जाताः । क्षमायाचनार्थञ्च विनम्रीभूय श्रीनिम्बार्कभगवतः श्रीचरणा-म्भोजेषु साष्टाङ्गदण्डवत्प्रणतिपूर्वकं भूमौ न्यपतन्--समवेताश्च सर्वे प्रोचुः, कृपासिन्धो ! भगवन् ! सर्वैरस्माभिरक्षम्यो महापराध आचरितः । भवतां परमदिव्यस्वरूपं नैव सुविदितमस्ति । अतो हे परमाचार्यवर्य !**

**क्षम्यतां-क्षम्यतां ज्ञानशून्यैरस्माभिर्यत्किमप्यनिष्टं विहितं तद्भवद्भि-रनुग्रहपरवशैरहेतुककृपाकादम्बिनीपरिवर्षणेन मन्त्रोपदेशेन च वयं भवत्पदपद्मप्रपन्ना विधेया भृशमित्यस्माकं श्रीमच्चरणसरोरुहेषु सादरं प्रणतिपुरस्सरं निवेदनम् ।**

ऐसा निश्चय करके सबने आपस में मिलकर श्रीनिम्बार्क भगवान् के चारों ओर गोलाकार रूप से अग्नि का प्रयोग किया । क्षण मात्र में ही वहाँ अग्नि भीषण रूप से प्रकट हुई । उस समय सर्वान्तर्यामी सर्वज्ञ सर्वेश्वर श्रीकृष्ण ने भगवान् पद्मनाभ के स्वरूप से शीघ्र ही वहीं प्रकट होकर अपने करकमल के संकल्प से ही, बिना बादल के ही वृष्टि की, जिससे तत्काल प्रज्वलित अग्नि परम शीतल हो गयी ।

अभूतपूर्व विचित्र चमत्कार पूर्ण इस दृश्य को देखकर वे मूर्ख उपद्रव करने वाले ग्रामीण लोग अति आश्चर्य से चकित हो गये और क्षमा याचना के लिए नम्र होकर श्रीनिम्बार्क भगवान् के श्रीचरणकमलों में साष्टाङ्ग दण्डवत् प्रणामपूर्वक भूमि पर गिर गये और सभी एक साथ बोले, हे कृपासिन्धो ! भगवन् ! हम सभी ने अक्षम्य अपराध किया है । आपके परम दिव्य स्वरूप को हमने नहीं समझा । अतः हे परम आचार्य प्रवर ! क्षमा करें, क्षमा करें, हम मूर्खों ने जो कुछ भी पाप किया है, अनुग्रह-परायण आप अकारण करुणा रूप मेघमाला की वृष्टि से और मन्त्रोपदेश से आपके श्रीचरणकमलों में शरणागत हमको अनुगृहीत करें, यह हमारा आपश्री के चरणकमलों में सादर प्रणाम पूर्वक निवेदन है ।

**शरणागतग्राम्यजनकृतं विनीतनिवेदनं समाकर्ण्य श्रीमत्पूज्य-चरणैश्चाऽप्यभाणि । यद्भो सुभगाः ! यत्किमपि जातं भवद्भिस्तत्सर्वम-ज्ञानतावशेनैव समाचरितम्, तथाऽथाऽग्रे कदापि कुत्रापीदृक्प्रसङ्गे कस्य-चिज्जनस्याऽप्यनिष्टन्नो भवेदिति द्रढीयान्संकल्पो मनसि विधातव्यः । एवं समुपदिश्य वैष्णवपञ्चसंस्कारपूर्विकां श्रीशरणागतिमन्त्रदीक्षां**

**श्रीगोपालमन्त्रराजदीक्षाञ्च सम्यक् प्रदाय श्रीनिम्बार्कभगवान् भगवत्सेवां सम्पाद्य शिष्यपरिकरैः सह ततोऽग्रे प्रस्थितवान् ।**

शरण में आये हुए ग्रामीण मनुष्यों के द्वारा किये गये विनम्र निवेदन को सुनकर पूज्यश्री आचार्यचरणों ने कहा, हे भले मनुष्यों ! जो कुछ भी हुआ, वह सब अज्ञानवश ही हुआ है, अब आगे कभी भी कहीं भी ऐसे प्रसङ्ग में किसी भी मनुष्य का अनिष्ट नहीं हो, ऐसा दृढ़ संकल्प मन में करना चाहिए । ऐसा उपदेश देकर वैष्णव पञ्च संस्कारपूर्वक शरणागति मन्त्र दीक्षा और गोपालमन्त्र-दीक्षा विधिपूर्वक प्रदान कर श्रीनिम्बार्क भगवान् ने भगवत्सेवा सम्पादन कर शिष्य परिकर के साथ वहाँ से आगे प्रस्थान किया।

**तीर्थयात्रासन्दर्भे च यदा श्रीमदाचार्यवर्या द्वारकाधाम्नि गता आसंस्तदा शास्त्रविहित-शंख-चक्रादितप्तमुद्राधारणविधिर्विलुप्त आसीत्तस्य च पुनः शुभारम्भोऽपि सम्पादितः ।**

तीर्थयात्रा के प्रसङ्ग में जब श्रीआचार्यप्रवर द्वारका धाम में पधारे, तब शास्त्रानुसार शंखचक्राङ्कित तप्त मुद्रा धारण की विधि लुप्त हो गई थी, उसका पुनः आपश्री ने शुभारम्भ भी किया ।

**एकदा चाऽचार्यवर्यश्रीचरणाः परमपुण्यसलिलाया भगवत्या भागीरथ्याः श्रीगङ्गायाः सुरम्यपावनतमतटे श्रीसर्वेश्वरसेवाकर्मणि विराजमाना आसँस्तदाऽकस्मादेको विचित्रतमः कच्छपः श्रीगङ्गाधाराया बहिर्निस्सृत्य श्रीमच्चरणस्पर्शं विधाय सकाशे समक्षे च स्थितवान् । श्रीचरणकमलस्पर्शमात्रेण हठादेव कच्छपशरीरमपहाय दिव्यर्षिस्वरूपेण श्रीनिम्बार्कभगवतः सम्मुखे बद्धपाणिरवस्थितः । आचार्यवर्येण जिज्ञासितं यत्को भवान् ? कथमिमं कच्छपदेहं सम्प्राप्तवान् ? निर्दिश्यताञ्चाऽखिलं स्वकीयवृत्तजातमिति । श्रीनिम्बार्कभगवतो दिव्यवचनमवधार्य, ऋषि-वर्योऽब्रवीत्-हे श्रीमदाचार्यवर्य ! मतङ्गइतिप्रसिद्धोऽहमृषिरेकदाऽस्मद्-गुरुवर्यचरणानामज्ञानतापरवशेन महतीमवज्ञां विहितवान् । तदाऽस्म-**

च्छ्रीगुरुदेवपादाः परमप्रकुपिताः सञ्जाताः । तत्क्षणादेव तैराक्रोशवचनै-रभिशप्तोऽहं कच्छपयोनिं प्रलब्धवान् । नितरां विनयपुरस्सरमस्मदभ्य-र्चितैर्विनिवेदितैः श्रीमद्गुरुचरणैरभाणि यद्यदा भूतले श्रीसुदर्शनचक्रराजः श्रीहरिणाऽऽज्ञप्तो मनुजस्वरूपं धारयिष्यति तदा हि तत्पादाम्भोज-संस्पर्शमात्रेण पुन ऋषिस्वरूपं प्राप्स्यसीति समुपदिष्टः । अद्य मे परमं सौभाग्यं वरीवर्ति यतोहि भवतां सुदर्शनायुधावताराणां श्रीमदाचार्यचरणा-नामलभ्यदिव्यदर्शनमुपलभ्य परमकृतार्थोऽहं जातः । तत्र भवतां भवतां जयोऽस्तु जयोऽस्तु प्रफुल्लितचेतसेति मुहुर्मुहुः समुच्चारयन् साष्टाङ्ग-दण्डवत्प्रणामं प्रकुर्वन् श्रीनिम्बार्कभगवतः कृपापूर्णामाज्ञां हृदा गृहीत्वा तपश्चर्यार्थं प्रस्थितवान् ।

एक बार परम पूज्य श्रीआचार्यचरण परम पावनजलवाली भगवती भागीरथी श्रीगङ्गा के सुरम्य तट पर श्रीसर्वेश्वर भगवान् के सेवा कार्य में विराजमान थे, तब सहसा एक अतिविचित्र कच्छप ( कछुवा ) श्रीगङ्गाजी की धारा से बाहर निकल कर आचार्यश्री के चरण का स्पर्श करके सामने ही समीप में बैठ गया । आचार्यचरण कमल के स्पर्शमात्र से ही सहसा कच्छप शरीर का परित्याग करके दिव्य ऋषि स्वरूप से श्रीनिम्बार्क भगवान् के सम्मुख हाथ जोड़कर खड़ा हुआ । आचार्यश्री ने जानना चाहा कि आप कौन है ? यह कच्छप शरीर कैसे प्राप्त हुआ ? अपने सम्पूर्ण वृत्तान्त का कथन करो । श्रीनिम्बार्क भगवान् के दिव्य वचन को सुनकर ऋषिवर बोले, हे श्रीआचार्य-प्रवर ! मतङ्ग नामक मुझ ऋषि ने एक बार अज्ञान के कारण अपने श्रीगुरुवर चरणों का बहुत बड़ा अपराध कर दिया था । तब मेरे श्रीगुरुदेव अत्यधिक कुपित हो गये थे । उसी क्षण उन्होंने क्रोध भरे वचनों से शाप दिया और मैं कच्छप योनि को प्राप्त हो गया । अत्यधिक विनयपूर्वक प्रार्थना करने पर श्रीगुरु चरणों ने कहा कि जब भूतल पर श्रीभगवान् की आज्ञा से श्रीसुदर्शन चक्रराज मनुष्य रूप धारण करेंगे, तब ही उनके चरण कमल के स्पर्श मात्र से पुनः ऋषि स्वरूप को प्राप्त करोगे, ऐसा उपदेश प्रदान किया । आज मेरा परम

सौभाग्य है कि सुदर्शन चक्रराज के अवतार स्वरूप आप श्रीआचार्यचरणों के अलभ्य दर्शन प्राप्त कर परम कृतार्थ हुआ हूँ । आपश्री की जय हो, जय हो, प्रफुल्ल चित्त से बारम्बार ऐसा जयघोष करते हुए साष्टाङ्ग दण्डवत् प्रणाम करते हुए श्रीनिम्बार्क भगवान् की कृपापूर्ण आज्ञा को हृदय में धारण करके उसने तपश्चर्या के लिए प्रस्थान किया ।

**इतस्तु श्रीनिम्बार्काचार्यपादा अपि श्रीसर्वेश्वरप्रभोर्नित्यसेवां सम्पाद्य ततोऽग्रे यात्रार्थं सशिष्या व्रजितवन्तः । एवं हि यात्राकाले स्वकीयशिष्यवृन्दैः सह विहरन्तः श्रीमदाचार्यचरणा अनिमिषक्षेत्रे नैमिषारण्ये चक्रतीर्थे समागतवन्तः । तत्र च हठादेवाऽरण्यप्रदेशादनेके निशाचराः तीव्रकोलाहलं प्रकुर्वाणा उपागत्य विविधोपद्रवैरनर्थं चक्रुः । नैमिषारण्य-वास्तव्येभ्य ऋषि-मुनीश्वरेभ्यो बहुविधां भूयसीं यातनां प्रदाय श्रीनिम्बार्कभगवतः सन्निधौ समागत्य शस्त्रास्त्रप्रक्षेपणपूर्वकं महोपद्रव-परायणाः सञ्जाताः । सुदर्शनायुधावताराः श्रीनिम्बार्कभगवन्तः पल-मात्रेण श्रीसुदर्शनचक्रं प्रकटीकृत्य श्रीसर्वेश्वरचिन्तनरता अभवन् । प्रखरतेजः स्वरूपेण श्रीसुदर्शनचक्रराजेन निमिषमात्रेणैव दुष्कृत्यनिरताः सर्वेऽसुरा भस्मसात्कृताः । श्रीनिम्बार्कभगवतोऽतिविलक्षणचमत्कृतिपूर्ण-ममितप्रभावं संवीक्ष्य सर्वे शिष्यपरिकराः तपोनिष्ठर्षि-मुनिमहाभागा अपि परमविस्मयं याताः ।**

इधर श्रीनिम्बार्क भगवान् ने भी श्रीसर्वेश्वर भगवान् की नित्य सेवा का सम्पादन करके आगे यात्रा के लिए शिष्यों सहित प्रस्थान किया । इस प्रकार यात्रा के समय अपने शिष्य समूह के साथ विचरण करते हुए श्रीआचार्य-चरण देवताओं के क्षेत्र नैमिषारण्य में चक्रतीर्थ पर आये । वहीं पर अकस्मात् ही वन प्रदेश से अनेक राक्षस उग्र कोलाहल करते हुए समीप आकर उपद्रवों के साथ अनर्थ करने लगे । नैमिषारण्य में रहने वाले तपस्वी ऋषि-मुनीश्वरों को अनेक प्रकार बहुत बड़ी यातनाएँ देकर श्रीनिम्बार्क भगवान् के समीप आकर शस्त्रास्त्रों का प्रयोग करते हुए बड़े उपद्रव करने लगे । श्रीसुदर्शनावतार

श्रीनिम्बार्क भगवान् ने पल मात्र में ही श्रीसुदर्शन चक्र को प्रकट करके श्रीसर्वेश्वर प्रभु का चिन्तन करने लगे। प्रचण्ड तेजःस्वरूप श्रीसुदर्शन चक्रराज ने क्षण मात्र में ही दुष्कर्म करने वाले समस्त राक्षसों को भस्म कर दिया। श्रीनिम्बार्क भगवान् के अति विचित्र चमत्कारपूर्ण अद्भुत प्रभाव को देख कर समस्त शिष्य परिकर एवं तपोनिष्ठ ऋषि-मुनि महानुभाव भी अतीव आश्चर्य से चकित हुए।

**पुनरेकदा भारतभुवि विचरन् श्रीनिम्बार्कभगवान् ब्राह्मनद-प्रतीरमासाद्य तत्र विराजमान आसीत्तदा ब्राह्मनदाऽगाधाऽम्बुधारामध्ये कश्चिद् भगवद्भक्तो व्यापारपरायणोऽनेकजनैः साकं बहुवस्तुसहितं तरणिसमारूढो व्यवसायी यदोत्तालतरङ्गैरान्दोलायमानो जातस्तदा मृत्युभयाच्चेखिद्यमानो दूरादेव श्रीनिम्बार्कभगवतो दर्शनं विधाय तारस्वरेण न्यगदत् ''हे आचार्यवर ! परमगभीरवारिधारायां तीव्रोर्मिभिस्ताड्यमाना तरिरियं महानदे निमग्ना सलिलप्लाविता प्रभविष्यति, परिणामतस्तरणि-समारूढा वयं समग्रा ध्रुवमेव पञ्चत्वं प्राप्स्यामोऽतस्तावत् .... हे भगवन्तः! हे परमाचार्यवर्याः ! हे कृपार्णवाः ! द्रुतमेवाऽस्मान्समुद्धरन्तु।''**

पुनः एक बार भारत भूमि पर विचरण करते हुए श्रीनिम्बार्क भगवान् ब्राह्मनद के तट पर आकर वहीं विराजमान थे तब ब्राह्मनद की अगाध जल की धारा में कोई एक भगवान् का भक्त व्यापार करता हुआ अनेक मनुष्यों के साथ बहुत सामान के सहित नौका में बैठा था, जब ऊँची-ऊँची तरङ्गों से आन्दोलित हुआ, तब मृत्यु के भय से अत्यधिक दुःखी होता हुआ दूर से ही श्रीनिम्बार्क भगवान् के दर्शन करके उच्च स्वर से बोला, हे आचार्य प्रवर ! अत्यधिक गम्भीर ( गहरी ) जल धारा में तेज लहरों से ताड़ित यह नौका महानद में निमग्न होकर बह जायेगी और परिणामस्वरूप नौका में बैठे हुए हम सब निश्चित ही मर जायेंगे, अतः हे भगवन्, हे परमाचार्यवर ! हे दया के सागर ! शीघ्र ही हमारा उद्धार कीजिए।

श्रीभगवन्निम्बार्काचार्यचरणा अपि भक्तवरस्य महीयसीं विपदामनुभूयाऽतीवकरुणक्रन्दनयुतमार्तस्वरञ्च समाकर्ण्य स्वकीयाऽपरिमितपरमदिव्यतेजसा त्वरितमेव तरण्याः पूर्णतोऽतितरां सुरक्षां व्यदधुः । श्रीहरिभक्तिनिष्ठो व्यवसायी तरेरद्भुतां सर्वविधां सुरक्षामुपलभ्य महानदतटे निरातङ्कं सकुशलं परिकरैः सहाव्रज्य सविनयं प्रोवाच, हे श्रीमदाचार्यवर्याः ! भवतां परमानुकम्पयैव तरणिरियं सर्वतः सुरक्षिताऽभवत्, वयञ्च समस्ता भवत्किङ्कराः सर्वरीत्या नितान्तं सुरक्षिता अभवाम । एवं स्वकीयोद्गारं प्रकटयन् श्रीमदाचार्यचरणकमलयोः साष्टाङ्गप्रणतिपुरस्सरमवनौ सपरिकरो विलुलोठ । ततः परञ्च सर्वे मन्त्रदीक्षोपदेशार्थं श्रीमदाचार्यचरणसन्निधौ सविनयं स्वकीयहृत्कामनां याचमानाः सम्प्रार्थयामासुः । परमकरुणार्णवाः कृपासिन्धवः श्रीमदाचार्यवर्या अपि निखिलान् श्रीगोपालमन्त्रराजदीक्षया सह भगवदुपासनां समुपदिश्य ततोऽग्रे प्रस्थितवन्तः। इतस्तु व्यवसायरतो भगवद्भक्तः सपरिकरो मन्त्रदीक्षामादाय पुलकितमनस्कः स्वगेहं निर्भयतया समाजगाम । श्रीमदाचार्यचरणाः ततः प्रस्थानानन्तरमेकदा तीर्थयात्रां प्रकुर्वन्तः पथि परमविस्मयावहं दृश्यं विलोकितवन्तः । तत्रैका पुण्यतोयाऽपगा प्रवहन्ती यत्रासीऽऽच्च तत्पुलिने केचन सन्तो महात्मानः खिन्नमानसाः समासीना आसन् । श्रीभगवन्निम्बार्कपादाः खिन्नमानसान्महात्मनः संदृश्य प्रोचुर्यद् भो महात्मप्रवराः ! कथमौदासीन्यमाकलयन्ति भवन्तः ? कोऽत्र हेतुः ? सत्वरमेव स्वीयपरिस्थितिं निगदन्तु । समुपस्थितैः सर्वैः सद्भिर्महात्मभिरेकस्वरेणोट्टङ्कितम्-

हे श्रीमदाचार्यवर्याः ! इह खलु नितरां प्रवहन्ती स्रोतस्विनीयं स्वच्छाम्बुपरिपूर्णाऽऽसीत्पूर्वं परमधुना पुण्यसलिलाऽपगेयं रक्तसंवलिताऽभिजाताऽतो वयं नितान्तं कष्टमनुभवामोऽतीवचिन्तातुरा अभवाम । अद्यत्वेऽकस्माद् भवद्दर्शनं समवाप्य परमकृतार्थाश्च सञ्जाताः । अस्माभिरनुभूयते यद्यदि भवतां पावनपदारविन्दस्य सरिज्जलधारायाः संस्पर्शो

**भवेत्तर्हि ध्रुवमेव समग्रा पुण्यसलिलेयं स्रवन्ती निर्मला प्रभविष्यतीत्यस्माकं सश्रद्धं साग्रहं विनीतनिवेदनमिदमुररीकृत्य महीयसी दिव्याऽनुकम्पा विधेया ।**

भगवान् श्रीनिम्बार्काचार्य चरण भी उस श्रेष्ठ भक्त की बड़ी विपत्ति का अनुभव करके और अत्यन्त करुण क्रन्दनयुक्त वेदना भरे स्वर को सुनकर अपने अतुलित परम दिव्य तेज से शीघ्र ही नौका की पूर्णरूप से सुरक्षा की । श्री भगवान् की भक्ति में निष्ठारत व्यापारी नौका की सब प्रकार की अद्भुत सुरक्षा को प्राप्त करके महानद के तट पर बिना भय के कुशलता के साथ परिकरों के साथ आकर बोला, हे श्री आचार्यवर्य ! आपकी परम कृपा से ही यह नौका सब प्रकार से सुरक्षित हुई है और हम सब आप श्री के दास सब प्रकार से सुरक्षित हुए हैं । इस प्रकार अपने भाव प्रकट करता हुआ श्रीआचार्य श्रीचरणकमलों में साष्टाङ्ग प्रणाम पूर्वक पृथ्वी पर परिकर सहित लौटने लगा। परम कृपा के सागर आचार्यश्री ने भी सबको गोपाल मन्त्रराज की दीक्षा प्रदान करके आगे प्रस्थान किया । इधर व्यवसाय परायण वह भगवद्भक्त अपने परिकर के साथ मन्त्र दीक्षा लेकर प्रसन्न मन से निर्भयता से अपने घर को गया । श्रीआचार्यचरणों ने भी वहाँ से प्रस्थान के पश्चात् एक बार यात्रा करते हुए मार्ग में एक अति आश्चर्यकारी दृश्य को देखा । वहीं एक पवित्र जल से परिपूर्ण नदी बह रही थी । जहाँ उसके तट पर कुछ सन्त महात्मा खिन्न मन होकर बैठे हुए थे, श्रीनिम्बार्क भगवान् ने खिन्न मन वाले उन महात्माओं को देख-कर पूछा, श्रेष्ठ महात्माओं ! आप उदासीन क्यों हो रहे हैं ? यहाँ क्या कारण है ? शीघ्र ही अपनी परिस्थिति का परिचय दीजिए । समस्त सन्त-महात्माओं ने एक स्वर से कहा, हे श्रीमद् आचार्यप्रवर, यहाँ पहले बहती हुई यह नदी स्वच्छ जल से परिपूर्ण थी, किन्तु इस समय पवित्र जलवती यह नदी रक्तमिश्रित जलवाली हो गई है, अतः हम अतीव कष्ट का अनुभव कर रहे हैं और अत्यधिक चिन्ता से व्याकुल हो रहे हैं । आज अकस्मात् आपके दर्शन प्राप्त करके हम परम कृतार्थ हो गये । हम अनुभव करते हैं कि

यदि आपके पवित्र चरणारविन्द का नदी की जलधारा से स्पर्श हो जाय तो निश्चित ही पवित्र जलवाली यह नदी निर्मल हो जायेगी, ऐसा हमारा श्रद्धा एवं आग्रह के सहित विनम्र निवेदन है । इस निवेदन को स्वीकार कर अपनी दिव्य कृपा कीजिये ।

परमकरुणावरुणालयेन श्रीमदाचार्यवर्येण निम्बार्कभगवता महात्मकृतनिवेदनमवधार्य स्वकीयकण्ठसुशोभित-श्रीसर्वेश्वरप्रभु-सहितेन पुरतो भूत्वा सरिज्जलधाराया निजपदपङ्कजस्पर्शो विहितः । श्रीमच्चरणारविन्दसंस्पर्शमात्रेण त्वरितमेव सरिज्जलं परमनिर्मलं रुधिर-रहितञ्च प्राभवत् । एतदतीवविस्मयावहमलौकिकप्रभावमालोक्य समे सन्तो महात्मप्रवराः श्रीनिम्बार्कभगवतो युगलाऽङ्घ्रिसरोरुहेषु साष्टाङ्ग-दण्डवत्प्रणतिपुरस्सरं निपतितवन्तः, श्रीचरणेषु प्रार्थितवन्तश्च यदस्मान् सर्वान् भवत्प्रपन्नान् स्वीयानुकम्पयाऽभिषिच्य मन्त्रोपदेशेन कृतार्थयन्तु भवन्तः । वयमभाग्या अधुनापर्यन्तमपि नैव कुत्राऽपि विधिवन्मन्त्रोपदेशं प्रलब्धवन्तः । वैष्णवताया याथार्थ्यस्वरूपेण सर्वथैव वञ्चिता आस्म । अद्याऽस्माकं समेषां महनीयं सौभाग्यमस्ति यन्महामङ्गलस्वरूपं भव-द्दर्शनमुपलभ्याऽमितानन्दमनुभवामः । इदमित्थं दैन्यसंवलितं समग्र-सन्महात्मवचनं श्रुत्वा श्रीचरणाः सर्वेभ्यो मन्त्रदीक्षां प्रदाय वैष्णवधर्मस्य सदुपदेशं विदधानास्ततोऽग्रे प्रस्थानमाचक्रुः ।

परम कृपा के सागर श्रीआचार्यचरण निम्बार्क भगवान् ने महात्माओं के निवेदन को सुन कर अपने कण्ठ में शोभायमान श्रीसर्वेश्वर प्रभु के सहित आगे बढ़ कर नदी की जलधारा से अपने चरणकमल का स्पर्श किया । आचार्यश्री के चरणकमल के स्पर्श मात्र से तत्काल नदी का ज़ल रुधिर रहित निर्मल हो गया । यह अत्यन्त आश्चर्यकारी अलौकिक प्रभाव देखकर समस्त सन्त-महात्मा श्रीनिम्बार्क भगवान् के युगलचरण कमलों में साष्टाङ्ग दण्डवत् प्रणामपूर्वक गिरे और श्रीचरणों में प्रार्थना की कि, हम सब शरणागतों को अपनी अनुकम्पा से अभिषिञ्चन करते हुए मन्त्रोपदेश प्रदान कर कृतार्थ कीजिए।

हम भाग्यहीन हैं, जो अभी तक भी कहीं मन्त्रोपदेश प्राप्त नहीं कर पाये हैं और वैष्णवता के यथार्थस्वरूप से सर्वथा वञ्चित रहे हैं । आज हम सबका बड़ा सौभाग्य है कि, महामङ्गल स्वरूप आपके दर्शन प्राप्त करके अतीव आनन्द का अनुभव कर रहे हैं । इस प्रकार समस्त महात्माओं के इस दीनतायुक्त वचन को सुनकर श्रीचरणों ने सबको मन्त्र दीक्षा प्रदान करके वैष्णव धर्म का सदुपदेश प्रदान करते हुए वहीं से आगे प्रस्थान किया ।

**एवं प्रकारेण भारतवर्षस्य चतुर्दिक्षु विचरन्तः श्रीमद्भगवन्निम्बार्काचार्यचरणा अनादिवैदिकसनातनधर्मस्य प्रचुरं प्रचारं कृतवन्तः ।**

इस प्रकार सम्पूर्ण भारत में विचरण करते हुए निम्बार्क भगवान् ने अनादि वैदिक सनातन वैष्णव धर्म का प्रचुर मात्रा में प्रचार किया ।

**एवं ह्येकदा कैश्चिद्वराकैर्यष्टिका प्रहारैः प्रपीड्यमाना बहुसंख्यका गाः श्रीनिम्बार्कभगवत्पादाः पथि विचरन्तो विलोकितवन्तः । दृष्ट्वैव तत्क्षणादेव स्वीयप्रखरतेजसा स्तम्भनशक्त्या च समस्तवराकान् स्तम्भितानकुर्वन् । ते किमपि कर्तुं पूर्णतोऽसमर्था अभवन् तथा तडिद्वेदनानुरूपकष्टमनुभवन्त आसंस्तदा दूरादेवाऽऽर्तस्वरेण समे श्रीनिम्बार्कभगवतः सकाशे क्षमायाचनार्थं प्रार्थयामासुः । श्रीमच्चरणा अपि तान्विपन्नान् प्रपन्नान्पूर्णतः समुपदिश्य श्रीव्रजधाम्ने प्रस्थानमाचक्रुः ।**

इसी प्रकार एक बार कुछ दुष्टों द्वारा लाठियों के प्रहार से पीड़ित अनेक गोमाताओं को श्रीनिम्बार्क भगवान् ने मार्ग में विचरण करते हुए देखा। देखते ही तत्क्षण अपने दिव्य तेज से और स्तम्भन शक्ति से समस्त दुष्टों को स्तम्भित कर दिया । वे कुछ भी करने में समर्थ नहीं हुए और विद्युत् की भाँति वेदना का अनुभव कर रहे थे, उस समय दूर से ही आर्त्त स्वर से सब श्रीनिम्बार्क भगवान् के सामने क्षमायाचना के लिए प्रार्थना करने लगे ।

श्रीआचार्य चरणों ने भी उन आपद्ग्रस्त शरणागतों को अच्छी प्रकार उपदेश प्रदान कर श्रीव्रजधाम के लिए प्रस्थान किया ।

**एवंविधां तीर्थयात्रां सर्वतः सम्पाद्य व्रजधाम्नि श्रीगोवर्धनोपत्यकासुशोभितं स्वकीयतपःस्थलं निम्बग्राममाजग्मुः । श्रीनिम्बार्कभगवतोऽतिशयदिव्यभव्यमङ्गलमयसुभगदर्शनं विधाय सर्वे विरक्तवैष्णवाः सन्तोमहात्मनो व्रजवासिनश्च परमपुलकिताः समभवन् ।**

इस प्रकार की तीर्थ यात्रा को सब प्रकार से पूर्ण कर व्रज धाम में श्रीगोवर्द्धन उपत्यका ( समीप की भूमि ) में शोभायमान अपनी तपोभूमि निम्बग्राम को आये । निम्बार्क भगवान् के अतिशय दिव्य और भव्य मङ्गलमय शुभ दर्शन करके सब व्रजवासी परम हर्षित हुए ।

**श्रीमदरुणमहर्षिवर्योऽपि श्रीजयन्तीदेव्या सार्द्धं स्वात्मजस्य श्री भगवन्निम्बार्काचार्यस्याऽनिर्वचनीयं लोकोत्तरप्रभावं परमप्रखरवैदुष्यं श्रीसर्वेश्वरप्रभोः सेवाऽऽराधनादिनिखिलं पावनकार्यजातं विपुलमङ्गलमञ्जुलस्वरूपञ्च दर्शं दर्शमत्यन्तानन्दमवाप ।**

श्रीअरुण महर्षिवर भी श्रीमती जयन्तीदेवी के साथ अपने पुत्र भगवान् श्रीनिम्बार्काचार्य के अति अलौकिक अनिर्वचनीय प्रभाव को परम दिव्य वैदुष्य, श्रीसर्वेश्वर प्रभु की सेवा आराधना आदि समस्त पावन कार्यों और अति मङ्गल एवं सुन्दर स्वरूप को देख-देख कर अत्यन्त आनन्द को प्राप्त हुए ।

**शनैः शनैः सम्प्राप्ते च समये वार्द्धक्याऽनन्तरं श्रीनिम्बार्कभगवन्तं प्रति सकलशास्त्रसारभूतं श्रीराधाकृष्णभक्तितत्त्वगूढरहस्यं समुपदिश्य सृष्टिचक्राऽपरिहार्यविधानानुसारेण भगवन्तं श्रीसर्वेश्वरं हृद्यवधार्य प्रतिपलञ्च तन्मनोहरमधुरस्वरूपं संस्मरन् महर्षिवर्यश्रीमदरुणो जयन्तीदेव्या सह श्रीराधामुकुन्दसच्चिन्मयनित्यनवदिव्यधाम्नि नित्यललितलीलायां प्रविवेश ।**

धीरे-धीरे समय प्राप्त होने पर वृद्धावस्था के अनन्तर श्रीनिम्बार्क भगवान् के प्रति सम्पूर्ण शास्त्रों का सारभूत भगवान् श्रीराधाकृष्ण भक्ति तत्त्व

के गूढ रहस्य का उपदेश प्रदान करके संसार चक्र के अपरिहार्य विधान के अनुसार भगवान् श्रीसर्वेश्वर को हृदय में स्थापित करके प्रतिक्षण उनके मनोहर मधुर स्वरूप का स्मरण करते हुए महर्षिवर श्रीअरुण ने जयन्ती देवी के साथ श्रीराधामुकुन्द सत् चित् स्वरूप नित्य नवीन दिव्य धाम में नित्य ललित लीला में प्रवेश किया ।

**यद्यपि श्रीभगवन्निम्बार्काचार्यवर्याः परात्पररसब्रह्मसर्वेश्वर-श्रीकृष्णदक्षिणकरकञ्जाङ्गुलिनित्यसुशोभितनित्यपार्षदश्रीसुदर्शनचक्रावतारा धराधाम्नि मनुजस्वरूपेणाऽवतीर्य परमाचार्यस्वरूपेण समवस्थिता आसंस्तथापि पितृचरणवियोगं प्रसहमानाः सम्प्रदायप्रचारार्थं नैष्ठिकविरक्तबालब्रह्मचारिदिव्यस्वरूपेण भूतले व्रजधाम्नि गोवर्धनान्तिके निम्बग्रामस्वतपोभूमौ विराजमानाः प्रस्थानत्रयीमाश्रित्य तदुपरि दिव्यभाष्यप्रणयनं सम्पाद्य स्वाभाविकद्वैताद्वैतसिद्धान्तप्रतिपादकान् भग-वच्छ्रीराधाकृष्णभक्तिरसोपासनापरकान्विविधग्रन्थान्प्रणीतवन्तः ।**

यद्यपि भगवान् श्रीनिम्बार्काचार्यचरण परात्पर रसब्रह्म सर्वेश्वर श्रीकृष्ण के दक्षिण करकमल की अङ्गुली में सुशोभित नित्य पार्षद श्रीसुदर्शन-चक्रराज ही धराधाम पर मनुष्य स्वरूप से अवतीर्ण होकर परमाचार्य स्वरूप से विराजमान थे तो भी पिताश्री के वियोग को सहन करते हुए सम्प्रदाय प्रचार के लिए नैष्ठिक विरक्त बाल ब्रह्मचारी दिव्य स्वरूप से भूतल में व्रजधाम में गोवर्द्धन के निकट निम्बग्राम अपनी तपोभूमि पर विराजमान होकर प्रस्थानत्रयी पर दिव्य भाष्य की रचना कर स्वाभाविक द्वैताद्वैत सिद्धान्त प्रतिपादक भगवान् श्रीराधाकृष्ण भक्तिरस-उपासना का ज्ञान कराने वाले अनेक ग्रन्थों की रचना की ।

**अथ कालान्तरे स्वकीयान् प्रमुखशिष्यान् श्रीनिवासाचार्य-श्रीमदौदुम्बराचार्य-श्रीगौरमुखाचार्य-श्रीलक्ष्मणभट्टाचार्यवर्यादि-कान्प्रति स्वाभाविकद्वैताद्वैतसिद्धान्तस्य वृन्दावननिकुञ्जविहारिश्रीराधा-कृष्णनिकुञ्जरसोपासनायाश्च परमदिव्योपदेशमकुर्वन् भगवन्निम्बार्का-**

**चार्यपादाः । तथा च स्वीयपट्टशिष्याय पाञ्चजन्यशङ्खावताराय श्रीश्रीनिवासाचार्यवर्य्याय श्रीसनकादिमहर्षिसंसेव्यमर्चाविग्रहं शालग्रामस्वरूपं श्रीसर्वेश्वरप्रभुं विधिवत्सम्यक्प्रदाय समादिष्टवन्तो यद्भवता ब्रह्मसूत्रोपरि मदीयवृत्यात्मकस्य 'वेदान्तपारिजात-सौरभा'ख्यभाष्यस्य विशदीकरणार्थं बृहद्भाष्यरचना कर्तव्येत्यस्मदीयाऽनुज्ञा परिपालनीया ।**

तदनन्तर एक बार श्रीनिम्बार्काचार्य भगवान् ने अपने प्रमुख शिष्य श्री श्रीनिवासाचार्य, श्रीऔदुम्बराचार्य, श्रीगौरमुखाचार्य-श्रीलक्ष्मणभट्टाचार्य प्रभृति के प्रति स्वाभाविक द्वैताद्वैत सिद्धान्त और श्रीवृन्दावननिकुञ्जविहारी श्रीराधाकृष्ण की निकुञ्जरसोपासना का परम दिव्य उपदेश किया और अपने पट्टशिष्य पाञ्चजन्यशङ्खावतार श्रीनिवासाचार्यजी को सनकादि-महर्षि संसेव्य अर्चाविग्रह शालग्राम स्वरूप श्रीसर्वेश्वर प्रभु को विधिवत् प्रदान कर आदेश दिया कि आप ब्रह्मसूत्र पर मेरे वृत्यात्मक 'वेदान्त पारिजात सौरभ' नामक भाष्य का विस्तार करने के लिए बृहद्-भाष्य की रचना करें तथा इस हमारी आज्ञा का पालन करें ।

**श्रीमन्निवासाचार्यवर्योऽपि श्रीभगवन्निम्बार्काचार्यपादानां गरीयसीं दिव्याऽऽज्ञां सादरं सश्रद्धं सप्रश्रयञ्च शिरसि सन्निधाय निवेदितवान्-- अयि सततवन्दनीयाः ! पूज्यश्रीचरणाः ! यद्भवद्भिराज्ञप्तोऽहं श्रीमद्-भवच्चरणकमलकृपाप्रसादलवबलेन तन्निश्चप्रचं बृहद्भाष्यस्य प्रणयनं संविधास्याम्येव । तत्र प्रमुखतो भवत्पदाम्भोजकृपैव सर्वार्थसिद्धिप्रदा-भवेदिति नूनम् ।**

श्रीनिवासाचार्यजी ने भी भगवान् निम्बार्काचार्यजी महाराज की महत्वपूर्ण दिव्य आज्ञा को सादर श्रद्धा एवं विनय के साथ शिरोधार्य कर निवेदन किया, हे सतत वन्दनीय परम पूज्य श्रीचरण ! जो आपने आज्ञा प्रदान की है, तदनुसार मैं आपश्री के चरणकमल प्रसाद के बल से निश्चित रूप से

बृहद्-भाष्य की रचना करूँगा । उसमें कोई सन्देह का विषय ही नहीं है, इसमें आपश्रीचरणकमल कृपा ही प्रमुख है ।

**यदैकदा श्रीमन्निम्बार्कभगवच्चरणाः श्रीसर्वेश्वरप्रभोरर्चायां विराजमाना आसंस्तदाऽनेकप्रबलशत्रुदलैर्नितरां प्रपीड्यमानाः केचन भगवत्परायणाः सात्विकवृत्तिसम्पन्नाः परमाऽऽस्तिका जनाः श्रीमदाचार्य-पदपङ्कजेषु समुपस्थिताः सञ्जातास्तथा सविनयं निवेदितवन्तः । हे शरणागतवत्सलाः ! श्रीमदाचार्यवर्याः ! वयं खलु विदूषितान्तः करणैर्दुष्ट-जनैः सातिशयं दन्दह्यमानाः सर्वतः सुरक्षार्थं भवच्चरणाम्भोजेषु समुप-स्थिताः स्मः । सम्प्रति भवदनुग्रहेण भवत्पावनसान्निध्यमवाप्य वयं पूर्णतो निश्शङ्का निरातङ्काश्च सञ्जाताः ।**

जब एक बार श्रीनिम्बार्क भगवान् श्रीसर्वेश्वर प्रभु की सेवा में विराज-मान थे, तब अनेक प्रबल शत्रुओं से अत्यधिक पीड़ित कुछ भगवत्-परायण सात्त्विक वृत्ति वाले आस्तिक जनों ने आचार्यचरण कमलों में उपस्थित होकर निवेदन किया । हे शरणागत वत्सल श्रीआचार्यचरण ! हम सब मलिन हृदय वाले दुष्ट मनुष्यों से अत्यधिक पीड़ित हैं तथा सर्व प्रकार से सुरक्षा के लिए आपश्री के चरणकमलों में उपस्थित हुए है । इस समय आपश्री के अनुग्रह से आपके परम पवित्र सान्निध्य को प्राप्त कर हम पूर्ण रूप से निःशङ्क और संकट रहित हो गये हैं ।

**परमकरुणार्णवाः श्रीनिम्बार्कभगवन्तः समागतान् सर्वथादोष-रहितान्प्रपन्नान्नगरवास्तव्यान् समग्रजनान् प्रति निगदितवन्तो यदद्य काऽपि भवतां स्वान्ते महती चिन्ताऽस्ति चेत्, तां परिजहतु सत्वरम् । सर्वान्तरात्मा सर्वेश्वरः स्वयं सर्वं शं विधास्यतीति नाऽत्र मनागपि सन्दे-हावसरः । एवं निगद्य क्षणमात्रेणैव श्रीमदाचार्यचरणैः दुरितजनानां सर्वथैव विपरीता मतिः सानुकूलाऽकारि । श्रीमदाचार्ययुग्माङ्घ्रिकञ्जदर्शनेनैव तथाऽपरिमितप्रखरदिव्यतेजसाऽपि समे विदूषितमानसाः श्रीमच्चरणार-विन्देषु सविनयं विलुठ्य पौनःपुन्येन क्षमां सम्प्रार्थ्य प्रपन्नतापुरस्सरं**

**वैष्णवताञ्च स्वीकृत्य श्रीराधासर्वेश्वरपदाम्बुजभक्तिपरायणा बभूवुः ।**

परम कृपा के सागर श्रीनिम्बार्क भगवान् ने आये हुए सब प्रकार दोष रहित, शरणागत नगरवासी समस्त मनुष्यों के प्रति कहा कि जो कोई भी आपके हृदय में बड़ी चिन्ता है, उसको शीघ्र ही छोड़ दीजिये । सर्वान्तरात्मा श्रीसर्वेश्वर प्रभु सब कल्याण करेंगे, इसमें थोड़ा भी सन्देह नहीं है । ऐसा कहकर क्षणमात्र में ही श्रीआचार्यचरणों ने दुष्ट मनुष्यों की सर्वथा विपरीत बुद्धि को अनुकूल बना दिया । आचार्यचरण कमलों के दर्शन से ही तथा अत्यधिक महान् दिव्य तेजोमय स्वरूप के दर्शनकर समस्त दुष्ट जनों ने श्रीआचार्यचरणकमलों में विनयपूर्वक लोट कर बारबार क्षमा प्रार्थना की तथा शरणागतपूर्वक वैष्णवता को धारण करके श्रीराधासर्वेश्वर चरणकमल की भक्ति के परायण हो गये ।

**इत्थं सुदर्शनचक्रावतारस्य सम्प्रदायप्रवर्तकस्याऽऽद्याचार्यस्य श्रीभगवन्निम्बार्काचार्यजगद्गुरोर्नानाविधानि लोकोत्तराणि परमपावन-तमानि दिव्यातिदिव्यचरितानि विद्यमानानि सन्ति, परमथ विस्तार-भियाऽत्रैव प्रस्तुताऽतिशयपवित्रप्रसङ्गस्याऽस्य विरामो विधीयते ।**

**अतोऽग्रे च निम्बार्कभगवतः स्वाभाविकद्वैताद्वैत-( भेदाभेद ) सिद्धान्तस्योपासनायाश्चाऽतिसंक्षेपेण परिचयः प्रदीयते, येन सम्प्रदाय-सिद्धान्तस्योपासनाविधेरपि परिबोधः साधुतया सरलतया समेषां कृते प्रभविष्यतीति विश्वसिमः ।**

इस प्रकार सुदर्शन चक्रावतार, सम्प्रदाय प्रवर्तक आद्याचार्य-जगद्गुरु भगवान् श्रीनिम्बार्काचार्य के अनेक प्रकार के अलौकिक परम पवित्र दिव्या-तिदिव्य चरित्र विद्यमान हैं, किन्तु विस्तार भय से यहाँ पर प्रस्तुत परम पवित्र इस प्रसङ्ग को विराम देते हैं और इसके आगे श्रीनिम्बार्क भगवान् के स्वाभाविक द्वैताद्वैत ( भेदाभेद ) सिद्धान्त और उपासना का अति संक्षेप में परिचय दिया जाता है, जिससे सम्प्रदाय सिद्धान्त और उपासना विधि का भी ज्ञान अच्छी प्रकार सरलता से सब के लिए होगा, ऐसा हम विश्वास करते हैं।

# अथ श्रीभगवन्निम्बार्काचार्यचरणानां

# वेदान्तदार्शनिक-स्वाभाविकद्वैताद्वैतसिद्धान्तः

आद्याचार्यवर्यैः श्रीभगवन्निम्बार्काचार्यपादैः स्वप्रणीत 'वेदान्त-कामधेनु-दशश्लोकी'ति संक्षिप्तात्मकश्लोकशास्त्रे यच्च सूत्ररूपेण प्रतिपादितं तत्सारल्येन हृद्यवधेयम्--

आचार्यवर्य्य श्रीनिम्बार्काचार्यचरणों ने ( स्वप्रणीत वेदान्तकामधेनु दशश्लोकी ) इस संक्षिप्तरूप श्लोकशास्त्र में जो सूत्ररूप से प्रतिपादित किया है, वह सरलता से हृदय में समझना चाहिये--

सर्वं हि विज्ञानमतो यथार्थकं
श्रुति-स्मृतिभ्यो निखिलस्य वस्तुनः ।
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपतापि श्रुतिसूत्रसाधिता ।।

इति श्लोकेऽस्मिन्स्वाभाविकद्वैताद्वैतसिद्धान्तस्य प्रतिपादनम-कारि श्रीमदाचार्यवर्य्येण । अत्र खलु श्लोकस्याऽस्यैव संक्षेपेण सौकर्येण च भावार्थो विज्ञेयः । यथा हि--

इस श्लोक में स्वाभाविक-द्वैताद्वैत सिद्धान्त का प्रतिपादन श्रीमदा-चार्यवर्य ने किया है । यहाँ इसी श्लोक का संक्षेप से, सरलता से भावार्थ जानना चाहिए । जैसे कि--

क्षेत्र-क्षेत्रज्ञ-प्रकृति-पुरुष-क्षराक्षरादिशब्दाभिधेयस्य चेतना-चेतनात्मकस्य निखिलस्याऽपि जगतो ब्रह्मात्मकत्वात्परब्रह्मणः सर्वनियन्तुः सर्वेश्वरस्य श्रीकृष्णस्य चाऽखिलविश्वान्तरात्मत्वात्सर्वमपि विज्ञानं निश्चप्रचं यथार्थमेवाऽर्थाद्वास्तविकमेव । यतो या त्रिरूपता भोक्तृभोग्य-नियन्तृरूपविभिन्नता श्रुतिसूत्रसाधिताऽस्ति । तद्यथा "भोक्ता भोग्यं प्रेरितारञ्च मत्वा" "यतो वा इमानि भूतानि ज़ायन्ते" तदैक्षत

बहुस्यां प्रजायेय'' ''द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो ऽभिचाकशीति'' ''ज्ञाज्ञौ द्वावजावीशानीशौ'' ''नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'' ''अक्षरात्परतःपरः'' ''रसो वै सः'' ''रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति'' ''स तत्र पर्य्येति जक्षन् क्रीडन् रममाणः'' ''सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता'' ''स आत्मरति आत्म-क्रीड आत्ममिथुनः'' ''सत्यकामः सत्यसंकल्पः'' ''आनन्दं ब्रह्म'' ''सैषा-आनन्दस्य मीमांसा भवति'' ''अंशो नाना व्यपदेशात्'' ''भेद व्यपदेशाच्चाऽन्यः'' ''अधिकं तु भेदनिर्देशात्'' इत्यादि श्रुति-सूत्रेभ्यस्तथा--''ममैवांशो जीवलोके जीवभूतः सनातनः'' नत्वे वाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्वे वयमतः परम्'' ''भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।'' ''अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ।।'' ''द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।'' ''उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।।'' ''यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।'' ''ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।।'' ''ममैवांशो जीवलोके जीवभूतः सनातनः'' इत्यादि श्रीभगवद्विविधवचनेभ्यः सुस्पष्टमेवाऽर्थाद् **ब्रह्म सत्यं जगदपि सत्यमेव ।**

क्षेत्र और क्षेत्रज्ञ, प्रकृति और पुरुष, क्षर और अक्षर आदि शब्दों से कथन किये गये चेतनाचेतनातमक सम्पूर्ण जगत् का भी ब्रह्मरूप होने से परब्रह्म सर्वनियन्ता रूप से यथार्थ ही है, अर्थात् वास्तविक है । अथवा जिससे त्रिरूपतः--भोक्ता, भोग्य, नियन्तृरूप विभिन्नता है, वह श्रुति एवं सूत्रों से सिद्ध है । यथा--''भोक्ता भोग्यं प्रेरितारञ्चमत्वा'' ''यतो वा इमानि

भूतानि जायन्ते'' ''तदैक्षत बहुस्यां प्रजायेय''

''द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः-पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति''

''ज्ञाज्ञौ द्वावजावीशानीशौ''

''नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्''

'' स तत्र पर्य्येति जक्षन् क्रीडनन्रममाणः''

''सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता''

''स आत्मरति आत्मक्रीड़ आत्ममिथुनः''

''सत्यकामः सत्यसंकल्पः''

आनन्दं ब्रह्म''

''सैषा आनन्दस्य मीमांसा भवति''

''अंशो नाना व्यपदेशात्''

''भेदव्यपदेशाच्चाऽन्यः'' ''अधिकं तु भेदनिर्देशात्'' एवञ्च--

''ममैवांशो जीव लोके जीवभूतः सनातनः''

''नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः'' ।

''न चैवं न भविष्यामः सर्वे वयमतः परम् ।''

''भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।''

''अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।''

''अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।''

''जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥''

''द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥''

''उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥''

''यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥''

''ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥''

''ममैवांशो जीवलोके जीवभूतः सनातनः ।'' इत्यादि श्रुति-स्मृति एवं विविध भगवद् वचनों से सुस्पष्ट प्रमाणित है कि ब्रह्म तो सत्य है ही, साथ में जगत् भी सत्य है ।

ब्रह्मात्मकत्वादिदं निखिलं जगद्ब्रह्मणोऽभिन्नमपि विज्ञेयम् । तद्यथा--''सदेव सोम्येदमग्र आसीत्'' ''एकमेवाऽद्वितीयम्'' ''अयमात्मा ब्रह्म'' ''तत्त्वमसि'' ''सोऽहं ब्रह्माऽस्मि'' ''सर्वं खल्विदं ब्रह्म'' ''नेह नानाऽस्ति किञ्चन'' ''अद्वैतं परमार्थतः'' ''एको ह वै नारायण आसीत्'' ''तज्जलानिति शान्त उपासीत'' ''ऐतदात्म्यमिदं सर्वम्'' ''प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'' ''आत्मकृतेः परिणामात्'' ''तदन्यत्वमारम्भणशब्दादिभ्यः'' ''अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते'' ''मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव'' ''क्षेत्रज्ञं चापि मां विद्धि'' ''वासुदेवः सर्वमिति स महात्मा सुदुर्लभः'' इत्यादि श्रुति-सूत्र-गीतोक्त-भगवद्वचनैरभिन्नमप्यवधेयम् । त्रिरूपत्वस्य श्रुति-सूत्र-स्मृतिषु च प्रतिपादितेन स्वाभाविकस्वरूपेण भिन्नत्वाद्भिन्नमपि सुस्पष्टम् । एवं हि विविधाऽचिन्त्यविचित्रसंस्थानसम्पन्नं यावन्निखिलं जगद्-ब्रह्मभिन्नाभिन्न-चेतनाचेतनात्मकञ्च वरीवर्ति । यथा च सर्वनियन्तृत्व-सर्वात्मत्व-सर्वव्यापकत्व-स्वतन्त्रसत्व-सर्वाधारत्वादिधर्मैश्च तस्य तयोश्चाऽत्यन्तभेदः । ब्रह्मात्मकत्व-तन्नियम्यत्व-तत्तन्त्रसत्व-तत्पराधेयत्वादि-योगेन चाऽभेदः । एवंविधश्रीमद्भगवन्निम्बार्कप्रतिपादित-श्रुति-स्मृति-सूत्रसिद्धः स्वाभाविकद्वैताद्वैतसिद्धान्तः प्राज्ञैरवधेयो यथाहि श्रीनिम्बार्क-भगवता स्वप्रणीते ''वेदान्तपारिजातसौरभाऽ''ख्यवृत्यात्मकब्रह्मसूत्र-चतुःसूत्र्यां ''तत्तु समन्वयात्'' इति तुरीयसूत्रभाष्ये संक्षेपेण सम्यक्तया प्रत्यपादि, तद्यथा--

इस प्रकार चराचर जगत् की स्थिति और प्रवृत्ति ब्रह्म के अधीन है। अतएव ब्रह्म जगत् के अन्तरात्मा है । जिसकी आत्मा ब्रह्म हो--अर्थात् जीव और जगत् का आत्मा ब्रह्म है, तदर्थ यह समग्र विश्व ब्रह्मात्मक कहलाता है । अतः इस ब्रह्मात्मक जगत् को ब्रह्म से अभिन्न रूप से जानना चाहिये । जैसे--कंकण सुवर्णात्मक है, अतः सुवर्ण से अभिन्न है । वैसे ही जीव और जगत् ब्रह्मात्मक है, अतः ब्रह्म से अभिन्न है । ''सदेव सोम्येदमग्र आसीत्'' ''एकमेवाऽद्वितीयम्'' ''अयमात्मा ब्रह्म'' ''तत्त्वमसि'' ''सोऽहं ब्रह्माऽस्मि'' ''सर्वं खल्विदं ब्रह्म'' ''नेह नानाऽस्ति किञ्चन'' ''ऐतदात्म्यमिदं सर्वम्'' ''प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'' ''आत्मकृतः परिमाणात्'' ''तदन्यत्वमारम्भणशब्दादिभ्यः'' अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते'' ''मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव'' ''क्षेत्रज्ञं चापि मां विद्धि'' ''वासुदेवः सर्वमिति स महात्मा सुदुर्लभः'' इत्यादि श्रुति-स्मृति गीतोक्त भगवद्‌वचनों द्वारा अभिन्नता भी ( ब्रह्मात्मक जगत् की ) जाननी चाहिए ।

उक्त त्रिरूपत्व का श्रुति-स्मृति-सूत्र एवं स्मृतियों में प्रतिपादित होने से स्वाभाविक रूप से भिन्न होने से भिन्न भी सुस्पष्ट है । इस प्रकार विविध अचिन्त्य विचित्र संस्थान सम्पन्न यावन्मात्र सम्पूर्ण जगद् ब्रह्म से भिन्नाभिन्न और चेतनाचेतनात्मक है । जैसे कि सर्वनियन्तृत्त्व-सर्वात्मत्व-सर्वव्यापकत्व-स्वतन्त्रसत्व-सर्वाधारत्व आदि धर्मो से ब्रह्म का जीव एवं जगत् से अत्यन्त भेद है । ब्रह्मात्मकत्व-तन्नियम्यत्व-तत्तन्त्रसत्व तत्पराधेयत्व आदि योग से अभेद भी है । इस प्रकार से श्रीभगवन्निम्बार्क प्रतिपादित श्रुति-स्मृति-सूत्रों से सिद्ध स्वाभाविक द्वैताद्वैत सिद्धान्त विद्वानों को जानना चाहिए ।

**''तज्जिज्ञास्यं विश्वकारणं शास्त्रप्रमाणकं ब्रह्मैव न कर्मादि, तत्रैव प्रतिपादकतया कृत्स्नस्यापि वेदस्य समन्वयात् । मुख्यवृत्त्याऽन्वयः समन्वयस्तस्मात् । यद्वा वेदेषु तस्यैव प्रतिपादकतया समन्वयादिति संक्षेपः । न च कर्मणि तत्समन्वयो वक्तुं शक्यः, तस्य तु विविदिषोत्पादनेनैव नैराकाङ्क्ष्यात् । क्रत्वङ्गं ब्रह्मेति तु बालभाषितम् । तस्य सर्वकर्म-**

कर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्यात्तत्फदातृत्वाच्च, प्रत्युत कर्मणि एव विविदिषोत्पादनेन परम्परया तत्प्राप्तिसाधनीभूतज्ञानोत्पत्त्युपकारकत्वेन समन्वय इति निश्चीयते, विविदिषाश्रुतेः । ननु प्रत्यक्षादिप्रमाणाविषय-कत्ववच्छब्दप्रमाणाविषयत्वस्यापिश्रुतिसिद्धत्वान्नशास्त्रैकप्रमेयं ब्रह्मेति-प्राप्ते ब्रूमः । जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकम्, समस्तश्रुतीनां साक्षात्परम्परया वा तत्रैव समन्वयात् । तत्र लक्षण-प्रमाणादिवाक्यानां स्वत एव तद्विषयकत्वेन शाण्डिल्य-पञ्चाग्निमधु-विद्यादिवाक्यानां प्रतिपादितप्रकारकाणाञ्च परम्परया समन्वयः । यद्वा सर्वेषामपि वाक्यानां भिन्नप्रवृत्तिनिमित्तकत्वेऽपि साक्षादेव ब्रह्मणि सम-न्वयः। तत्तद्वाक्यविषयाणां सर्वेषामपि ब्रह्मात्मकत्वाविशेषेण मुख्य-वाच्यत्वात् । न चैवं विषयनिषेधपराणां बाधः शङ्कनीयस्तेषां ब्रह्मस्वरूप-गुणादिविषयकेयत्तानिषेधपरत्वेन समविषयत्वात् । किञ्चात्र प्रष्टव्यो भगवान्--शब्दाऽविषयं ब्रह्मेति वाक्यस्य वाच्यं ब्रह्माभिप्रेतं नवेति ? आद्ये वाच्यत्वसिद्धेरवाच्यत्वप्रतिज्ञाभङ्ग । द्वितीये सुतरां वाच्यतेति। तस्मात्सर्वज्ञः स्वाचिन्त्यशक्तिविश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासा विषयस्तत्रैव सर्वं शास्त्रं समन्वेतीत्यौपनिषदां सिद्धान्तः ।''

उपर्युक्त ''तत्तु समन्वयादि''ति सूत्रस्यैव ''वेदान्तपारिजात-सौरभा''ख्यभाष्यमाश्रित्य श्रीभगवन्निम्बार्कपट्टशिष्येण पाञ्चजन्यशङ्खा-वतारेण श्रीश्रीनिवासाचार्यवर्य्येण ''**वेदान्तकौस्तुभमि**''ति सुप्रसिद्धं भाष्यं व्यरचि, तच्चाऽत्र समेषां कृते सम्यग्बोधाय निम्नरूपेण यथावत्स-म्प्रदीयते । तद्यथा--

(वे. कौ.) ''एवं श्रीकृष्णस्य बृहद्गुणशक्त्याश्रयस्य जगदभिन्न-निमित्तकारणस्य वेदैकप्रमाणकत्वमुक्तम् । इदानीं तदेव द्रढयितुं सर्ववेद-समन्वयं तस्मिन्ब्रह्मणि सर्वेश्वरे दर्शयन्'' ''आम्नायस्य क्रियार्थत्वादा-नर्थक्यमतदर्थाना'' मिति वदता जैमिनिना सर्वोपि वेदः क्रियायां

योजितोऽक्रियार्थानामानर्थक्यविधानाद्वेदान्तानामपि क्रत्वङ्गकर्तृ-प्राशस्त्यप्रकाशनद्वारा क्रियायां समन्वयात्कथं वेदैकप्रमाणकं ब्रह्मेत्याक्षेपं निराकरोति ?

तु शब्दः पूर्वपक्षव्यावृत्यर्थः । तत् जिज्ञास्यं जगत्कारणं ब्रह्मैव वेदैकप्रमाणकम्, कुतः ? समन्वयात् । वेदेषु तस्यैव समन्वयात् । सम्यग्वाच्यतयाऽन्वयः समन्वयस्तस्मात् । सर्वस्य वेदस्य वा तस्मिन्मुमु-क्षुजिज्ञास्ये जगदभिन्ननिमित्तोपादानकारणे शास्त्रयोनौ प्रधानक्षेत्रज्ञकाल-कर्मादिनियन्तरि ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठे निखिलदोषगन्धाऽऽ-घ्रातमाहात्म्ये सार्वज्ञाद्यनन्तगुणनिलये मुक्तोपसृप्ये ब्रह्मणि श्रीकृष्णे सम्य-ग्वाचकतयाऽन्वयस्तस्मात् । समन्वितश्च ''यतो वा इमानि भूतानि जायन्ते'' ''आनन्दादेव खल्विमानि भूतानि जायन्ते'' ''एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च'' ''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'' ''तदैक्षत बहुस्यां प्रजायेय'' ''नारायणाज्जायते प्राणः'' ''नारायणा-द्ब्रह्मा जायते'' ''नारायणाद्रुद्रो जायते'' ''एको ह वै नारायण आसीत् न ब्रह्मा नेशानः'' ''ब्रह्म वा इदमेकमेवाग्र आसीत्'' ''ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदाहं ब्रह्मास्मीति'' । ''तस्मात्तत्सर्वमभवत्'' ''आत्मा वा इदमेकमेवाग्र आसीत्'' ''तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः'' ''सर्वे वेदा यत्पदमामनन्ति'' ''सर्वे वेदा यत्रैकी भवन्ति'' ''अन्तः प्रविष्टः शास्ता जनानाम्'' ''यं सर्वे देवा नमन्ति'' ''सत्यं ज्ञान-मनन्तं ब्रह्म'' ''सर्वं खल्विदं ब्रह्म'' ''य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः'' ''यः सर्वज्ञः सर्ववित्'' ''ब्रह्म-विदाप्नोति परम्'' ''ब्रह्मैवेदं सर्व'' मित्यादिवाक्यकदम्बस्तत्रैव । ननु पञ्चप्रकारवाक्यसमुदायस्तावत्समस्तो वेदः, वाक्यानि च विधिनिषेधार्थ-वादमन्त्रनामधेयाख्यानि । तत्र ''ज्योतिष्टोमेन यजेत स्वर्गकाम'' इत्यादि विधिवाक्यम् । ''ब्राह्मणो न हन्तव्य'' इत्यादि निषेधवाक्यम् । ''वायुर्वै क्षेपिष्ठा देवते'' त्यादयोऽर्थवादाः । ''इषे त्वा'' ''अग्निर्मूर्द्धादिव'' इत्या-

दयो मन्त्राः । ज्योतिष्टोमाऽश्वमेधादीनि नामधेयानीति तेषां विवेकः । तथा चोपक्रमे ''अथातो धर्मजिज्ञासे''ति सूत्रे वेदस्याध्ययनविधिकरण-कभावनाविधि भाव्यफलवदर्थपरत्वमुक्तम् । ''चोदना प्रमाणमिति (यत्र) कार्यपरत्वव्याप्यं वेदप्रामाण्यं तत्र कार्यपरत्वव्याप्यं वेदप्रामाण्यं तत्र कार्यपरत्वमिति व्याप्त्या निर्णीतम् । तत्र ''वायुर्वै क्षेपिष्ठा देवते'' त्वर्थ-वादानां धर्मे प्राणाण्यमस्ति नवेति संशये, पूर्वपक्षमाह--''आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'' मिति वेदस्य क्रिया एवार्थो विषयः प्रतिपाद्यो यस्य स क्रियार्थस्तस्य भावस्तत्त्वं तस्माद्धेतोरर्थवादानां प्रामाण्यं नास्ति । किं तर्हीत्याशङ्क्याह अतदर्थानामानर्थक्यमिति, न सा क्रिया अर्थो येषां ते अतदर्था अर्थवादादयस्तेषामानर्थक्यमर्थशून्यत्वमेवास्तु, तथैव वेदान्तानामपि, नहि ''स्वाध्यायोऽधेतव्य'' इत्यध्ययनविध्युपात्तानां निष्फलब्रह्मपरत्वे प्रामाण्यं युक्तमिति प्राप्ते, सिद्धान्तमाह--''विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु''रिति ।

अर्थवादानां विधिवाक्यैरेकवाक्यत्वात्तद्विधेयार्थानां स्तुत्यर्थेन स्तुत्यर्थरूपेण द्वारेणार्थवादाः प्रमाणं स्युरिति । एवञ्च विधिनिषेध विधु-राणां वेदान्तानां सिद्धार्थवस्तुबोधकानामपि मन्त्रार्थवादादिष्वेवान्तर्भा-वेणाध्ययनविध्युपात्तत्वात्सर्वथाऽऽनर्थक्य निरासाय परम्परया साध्ये कर्मण्येवान्वयो युक्तः । स्वातन्त्र्याभ्युपगमे निष्फलत्वापत्तेस्तेषां क्रत्वङ्ग-कर्तृत्व प्रतिपादनेन नैराकाङ्क्षम्बोध्यम् । तत्र तत्त्वंपदार्थपराणां वाक्यानां कर्मकर्त्तृदेवतास्तावकत्वं, तज्ज्ञानस्य परविद्याख्य फलस्ताव-कत्वं, वेदान्तवाक्यानि न ब्रह्मपराणि क्रत्वङ्ग कर्तृप्राशस्त्यप्रकाशनपर-त्वादर्थवादवाक्यवदिति चेन्न । स्वोत्प्रेक्षितकल्पनामात्रत्वात्, कर्मणो मोक्षोपायभूतविद्योत्पादकत्वेन परम्परया ब्रह्मण्येव समन्वयाच्च । ''तमेत-मात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने'' त्यादि श्रुतेः । अत्र यज्ञेन विविदिषन्तीति अश्वेन जिगमिषतीतिवत् यदि यज्ञाख्यस्य करणस्य ध्वात्वर्थेनान्वयस्तदा कर्मणो विद्यार्थत्वं तद्द्वारा

ब्रह्मपरत्वञ्च ज्ञेयम् । यदि तु सन्प्रत्यस्य प्राधान्यात्प्रत्ययार्थान्वयवशादि-च्छार्थत्वं तदेच्छाद्वारा विद्याङ्गत्वं तद्द्वारा ब्रह्मपरत्वम्बोध्यम् । विद्याङ्गत्वं कर्मणो वक्ष्यति च ''सर्वापेक्षा च यज्ञादिश्रुतेरश्वव'' दिति । न च वेदान्त-वेद्यं वस्तु क्रत्वङ्गमिति वक्तुं शक्यम् । तस्य सर्वकर्मकर्त्रादिकारक-नियन्तृत्वेन स्वातन्त्र्यात् । न च वेदान्तानां विध्यङ्गत्वमर्थवादादिवद्वक्तुं शक्यम् । भिन्नप्रकरणपठितत्वाद्विधिसान्निध्याभावाच्च । नापि प्रवृत्ति-निवृत्यभावरूपभूतार्थबोधकतया वेदान्तानां निष्फलत्वं वक्तुं शक्यम् । वेदान्तवेद्यब्रह्मज्ञानस्य मोक्षरूपपरम श्रेयः फलवत्त्वात् । ननु ''अक्षय्यं ह वै चातुर्मास्ययाजिन'' इत्यादिना कर्मणोऽपि तद्वत् फलश्रवणात्तत्र समन्वयो न दोषावह इतिचेन्न । ''यथेह कर्मजितो लोकः क्षीयते एवमेवा-मुत्र पुण्यजितोलोक'' इत्यस्याः केवलकर्मजितो लोकोऽनित्यः कर्मैक-प्राप्यत्वात्कृष्यादिवदित्यनुमानानुगृहीतायाः ''प्लवा ह्येतेऽदृढा यज्ञरूपा'' इति श्रुत्यन्तरदृढीकृतार्थायाः श्रुतेः प्राबल्यात्, ''अक्षय्यं ह वै चे'' त्यादि श्रुतेर्दौर्बल्याद्दुर्बलवाक्यार्थे कर्मणि तत्समन्वयस्यानौचितत्वाच्च । ''एत-द्विदुरमृतास्ते भवन्ति ब्रह्मविदाप्नोति पर'' मित्यादिश्रुत्युक्तोऽर्थस्तु न केनापि वेदवचनेन विरुद्ध्यते । न च शक्यश्चालयितुमनुमानशतैः । न च अक्षय्यमिति श्रुत्यर्थ बाधः, तस्या आपेक्षिकार्थपरत्वात्, ''आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! । मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते'' इति वेदपर्य्यायभूतायाः श्रीभगवत्स्मृतेरुभयत्र प्रामाण्याच्च । ननु स्यादेतदुपनिषद्भागस्य कथञ्चिद्ब्रह्म परत्वं तत्र तथात्वदर्शनात्पूर्व-भागस्य तु ''यावज्जीवमग्निहोत्रं जुहोति, ज्योतिष्टोमेन यजेत स्वर्गकाम'' इत्यादिना नित्यकाम्यादिकर्म विधायकत्वेन निराकाङ्क्षत्वश्रवणात्कथं ब्रह्मपरत्वमिति चेन्न । कृत्स्नस्यापि वेदस्य ब्रह्मपरत्वमेव, कर्मादौ तस्य केनचिदंशेन कथञ्चिदन्वयदर्शनेऽपि समन्वयस्तु ब्रह्मण्येव । तत्रोपनिषद्-भागस्य हि साक्षात्स्वरूपगुणादिप्रतिपादनपरत्वात्साक्षादन्वयः । तत्रापि चिदचिद्ब्रह्मस्वरूप परत्वेन भेदवाक्यानां सर्वस्य ब्रह्मात्मकत्वप्रतिपादन-

परत्वेनाभेदवाक्यानां सृष्ट्यादिपराणां मायिकगुणनिषेधपरत्वेन सगुण-वचनानां स्वाभाविकगुण प्रतिपादनपरत्वेन ''यद्वाचाऽनभ्युदित'' मित्यादीनामियत्तानवच्छिन्नत्व प्रतिपादनपरत्वेन चान्वयः । नित्यनैमित्तिककर्म-पराणां चाधिकारिसत्त्वशुद्धिसम्पादनद्वारा ब्रह्मविषयज्ञानादिसहकारित्वेन काम्यपराणां चेति ''तस्यैवानन्दस्यचान्यानि भूतानि मात्रामुपजीवन्ती''ति विषयानन्दस्यापि ब्रह्मानन्दलेशत्वात्तद् द्वारा ब्रह्मण्येवान्वयः । किञ्च काम्यानां मोक्षाधिकारीशुद्धदेवादिदेहोत्पादनद्वारा ब्रह्मविद्यापरत्वेन सम-न्वयः । किञ्चसंयोगपृथक्त्वन्यायेन ''दध्नेन्द्रियकामस्य जुहुया'' दिति वाक्यान्तरेण ''दध्ना जुहोती'' त्यनेन नित्यस्यापि दध्न इन्द्रियार्थत्वमिव स्वर्गाद्यर्थस्यापि कर्मणो विद्यार्थत्वं बोध्यम् । ''आप्रणखात्सुवर्णा'' दिवाक्यानां च श्रीविग्रहपरत्वेन समन्वयः । यद्वा सर्वस्य वस्तुजातस्य ब्रह्मात्मकत्वात्तद्वाचकशब्दजातस्य साक्षात्तत्रान्वयः । तस्मात्कृस्नस्य वेदस्य सर्वज्ञे स्वाभाविकानन्ताचिन्त्यशक्तौ जगत्कारणे ब्रह्मणि पुरुषोत्तमे चिदचिद्भिन्नाभिन्ने श्रीकृष्णे समन्वयः इति सिद्धम् ''वेदैश्च सर्वैरहमेव वेद्य'' इति श्रीमुखवचनात् । शास्त्रमूलभूता चतुःसूत्री व्याख्याताऽस्या व्याख्यानभूतं शास्त्रमिदम् ।।४।।''

अयमेवेत्थं संक्षेपेण **स्वाभाविक-भेदाभेद-सिद्धान्तः** श्रीमन्निम्बार्काचार्यचरणानां वेदविद्भिः श्रीसनकादि-नारद-व्यासादिभिः साधुतया विनिर्णीतो वर्तते नाऽत्र मनागपि विचिकित्साऽवधारणीया प्रेक्षावद्भिर्निम्बार्कदर्शनजिज्ञासुभिः साधकैश्च ।

*

# अथाऽत्र श्रीभगवन्निम्बार्काचार्योपदिष्ट-सर्वेश्वरश्रीराधाकृष्ण - युगलोपासना

''वेदान्तकामधेनु-दशश्लोकी'' समुपदिष्टसर्वेश्वरश्रीराधा-कृष्णयुगलोपासनाप्रकरणे श्रीमदाचार्यवर्येण वेदादिशास्त्रप्रतिपादित-स्वीयश्रीयुगलोपासनायाः परमोत्कृष्टतमो निर्देशो विहितस्तद्यथा--

''वेदान्तकामधेनु दशश्लोकी'' में समुपदिष्ट सर्वेश्वर श्रीराधाकृण-युगल उपासना प्रकरण में श्रीमद् आद्याचार्यवर्य ने वेदादि शास्त्र-प्रतिपादित अपनी युगल उपासना का परम उत्कृष्टतम निर्देश किया है । यथा--

स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ।।
अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम् ।।
उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ।
सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाऽखिलतत्त्वसाक्षिणे ।।

''वेदान्तकामधेनु-दशश्लोकी'' ग्रन्थः केवलदशश्लोकात्मक एवाऽस्ति । तस्मिंश्च श्रीनिम्बार्कभगवता घटसमुद्रवत्सूत्ररूपेण परात्पर-परब्रह्मस्वरूपस्य तदुपासनायाश्च तथा यावन्निखिलचिदचिद्भिन्नाभिन्ना-त्मकजीवजगतः प्राकृताऽप्राकृतकालस्वरूपस्योपासनापरम्परायाः श्रीभगवच्छरणागतिरहस्यस्य भक्तितत्त्वस्य तथोपासनाविरोधिरूपस्या-ऽऽदिविविधात्मकमतीवविलक्षणतमं प्रतिपादनमकारि । केवलमत्रप्रस्तु-तश्रीभगवदुपासनाप्रसङ्गे वेदान्तकामधेनोः श्लोकत्रयमाश्रित्याऽतिसंक्षिप्त-तया तद्विवेचनं क्रियते--

''वेदान्तकामधेनु दशश्लोकी'' ग्रन्थ केवल दशश्लोकात्मक ही है, उसमें श्रीनिम्बार्क भगवान् ने गागर में सागरवत् सूत्र रूप से परात्पर परब्रह्म

स्वरूप का और उनकी उपासना का तथा निखिल चित् अचित् भिन्नाभिन्नात्मक जीव एवं जगत् का, प्राकृत अप्राकृत कालस्वरूप का, उपासना परम्परा का, श्रीभगवान् की शरणागति रहस्य का, भक्ति तत्त्व का और उपासना के विरोधी रूप आदि का विविधात्मक अति विलक्षण प्रतिपादन किया है । यहाँ केवल प्रस्तुत श्रीभगवान् की उपासना के प्रसङ्ग में वेदान्त कामधेनु के तीन श्लोकों पर ही अति संक्षेप से विवेचन किया जाता है ।

यथाहि--स्वाभाविकतयाऽनादिप्रकृत्यैवाऽपास्ता अर्थान्निरस्ता अशेषा यावन्निखिलदोषा यस्मात्तमिति प्रतिपादनेन भगवतः श्रीकृष्णस्य प्राकृतहेयगुणरहितत्वं निर्दिष्टम् । अशेषकल्याणगुणैकराशिमिति कथनेन ज्ञानशक्तिबलैश्वर्यादिजगज्जन्माद्यनन्तगुणगणाऽर्णवत्वं निरतिशय सौन्दर्य-माधुर्य-सौशील्य-सौगन्ध्य-कारुण्य-मार्दवाद्यनन्तकल्याण-गुणनिलयत्वं, शास्त्रयोनित्व-सर्वनियन्तृत्व-सर्वव्यापकत्व-स्वतन्त्र-सत्वमोक्षप्रदत्वाद्यनन्तगुणैककोषत्वं विवेचितं यथा हि--''यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति'' ''एको देवः सर्वभूतेषु गूढः'' इत्यादिश्रुतिप्रमाणैश्च भगवतः सर्वाधारत्वं निगदितम् । एवं ह्यग्रे च व्यूहाङ्गिनमिति पदेन वासुदेव-संकर्षणप्रद्युम्ना-ऽनिरुद्धादिष्वङ्गित्वमपि ज्ञापितम् । तथा चाऽनेन भगवदीयनाना-विधावतारपरकत्वमप्यभिव्यञ्जितम् । वरेण्यमत्र सर्वदैव भगवतो दिव्यमङ्गलविग्रहस्वरूपं नितरां भजनीयम् । कमलेक्षणमरविन्दनेत्रं भक्ताऽऽह्लादकरं दिव्यस्वरूपं हरिं भगवन्तं परात्परं परं ब्रह्म श्रीकृष्णं ध्यायेम, प्रतिपलं वयं स्वान्ते स्मरेम, ''वेदान्तकामधेनुदशश्लोकी''ति वेदान्तग्रन्थस्य तुरीयश्लोकार्थभावः । अथाऽत्रपञ्चमश्लोकार्थभावो निगद्यते यथा च परब्रह्मणो भगवतः श्रीकृष्णस्य वामाङ्गे सर्वदा सानन्दं विराजमानामनुरूपसौभगामर्थाद्धर्यनुरूपामनन्तसखीपरिकरै र्नित्यसेवितां सर्वाऽभीष्टप्रदां देवीं-दिव्यस्वरूपां वृषभानुजां श्रीराधां श्रीकृष्णाह्लादिनीं वृन्दावनाधीश्वरीं नित्यनिकुञ्जेश्वरीं सदा-सततं स्मेरम नितरां भजेम ।

**अथ षष्ठश्लोकेनोपासनापरम्पराया उपदेशोपलब्धिस्तथेयमुपासना च भगवत्परायणैर्मुमुक्षुभिर्जनैरनवरतमाश्रयणीयेति द्योतितम् । सकलसृष्टिकर्तुर्ब्रह्मणो मानसपुत्रेभ्यश्चतुस्सनकादिमहर्षिवर्येभ्यो देवर्षिणा श्रीमन्नारदेन श्रीराधाकृष्णयुगलरसोपासना सम्प्राप्ता, तथा चेयमुपासना-ऽखिलतत्त्वपरमविज्ञेभ्यः श्रीदेवर्षिवर्येभ्यः श्रीमन्निम्बार्काचार्यचरणेनाऽधि-गता । अतस्तावत्सेयमुपासनाऽज्ञानान्धकारनिवृत्तये श्रीभगवत्प्राप्तये च भगवद्रसिकजनैः सर्वदैव स्वीयमानसे नितान्तमवधारणीया ।**

यथा-स्वाभाविकतया अनादि प्रकृति से ही निरस्त है, समस्तदोष जिससे ऐसा प्रतिपादन करने से भगवान् श्रीकृष्ण के प्राकृत हेय गुण राहित्य (दोषाभाव) निर्दिष्ट हुआ है । ''अशेषकल्याणगुणैकराशिम्'' ऐसा कथन करने से ज्ञान-शक्ति-बल-ऐश्वर्य आदि जगत् के जन्मादि अनन्त गुणगणों का सागर होना अतिशय सौन्दर्य-माधुर्य-सौशील्य-सौगन्ध्य-कारुण्य-मार्दव आदि अनन्तकल्याण गुणों का आधार होना, शास्त्राधार ( शास्त्रजनक ) सर्वनियतृत्व-सर्वात्मत्व-सर्वव्यापकत्व-स्वतन्त्रसत्व-मोक्ष प्रदान करना आदि अनेक गुणों के भण्डार के रूप में विवेचन किया गया है । यथा--''यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति'' ''एको देवः सर्वभूतेषु गूढः'' इत्यादि श्रुति प्रमाणों से भगवान् का सर्वाधारत्व कहा गया है । इसी प्रकार आगे ''व्यूहाङ्गिनम्'' इस पद से वासुदेव संकर्षण-प्रद्युम्न-अनिरुद्ध आदि में अङ्गित्व भी बताया गया है और इससे भगवान् के नानाविध अवतार धारण का भी संकेत किया गया है । 'वरेण्यम्' यही सर्वदा ही भगवान् का दिव्य मङ्गल विग्रह रूप अवश्यमेव भजना चाहिए। 'कमलेक्षणम्' कमलनयन भक्तों के आह्लादकारी दिव्यस्वरूप भगवान् हरि परात्पर परब्रह्म श्रीकृष्ण का ध्यान करते हैं, प्रतिपल हम अपने अन्तःकरण में स्मरण करते हैं । यह वेदान्त दशश्लोकी इस वेदान्त ग्रन्थ के चतुर्थ श्लोक का भाव हुआ ।

अब यहीं पञ्चम श्लोक का भावार्थ लिखा जाता है । यथा--परब्रह्म भगवान् श्रीकृष्ण के वामाङ्ग में सर्वदा सानन्द विराजमान भगवान् के अनुरूप सौभाग्यस्वरूप अनन्त सखी परिकर से नित्यसेवित, सर्वाभीष्ट प्रदान करने वाली दिव्य स्वरूपा वृषभानुजा श्रीराधा श्रीकृष्णाह्लादिनी वृन्दावनाधीश्वरी नित्यनिकुञ्जेश्वरी का सदा निरन्तर स्मरण करते हैं । षष्ठ श्लोक से उपासना परम्परा के उपदेश की उपलब्धि और उपासना भगवत्परायण मोक्षाभिलाषी जनों को निरन्तर धारण करनी चाहिए--ऐसा स्पष्ट बताया है । सकल सृष्टिकर्ता ब्रह्मा के मानस पुत्र श्रीसनकादिकों से देवर्षि श्रीनारद ने श्रीराधाकृष्ण की उपासना प्राप्त की और यही उपासना अखिल तत्त्ववेत्ता देवर्षि श्रीनारद से श्रीमन् निम्बार्काचार्य चरणों ने प्राप्त की । अतः यह उपासना अज्ञानान्धकार की निवृत्ति के लिए और श्रीभगवान् की प्राप्ति के लिए भगवद्रसिकजनों को सर्वदा ही अपने अन्तःकरण में अवश्यमेव धारण करनी चाहिए ।

**अथैवं हि श्रीमदाद्याचार्यवरेण्यैः स्वप्रणीत ''श्रीकृष्णप्रातः-स्तवराज'' स्तोत्रे श्रीवृन्दावनस्य तत्राऽपि नित्यनिकुञ्जरसस्य च यत्कमनीयत्वं प्रत्यपादि तद्रसिकसाधकभक्तजनैरवश्यं स्वान्तेऽवधार-णीम् । तद्यथा--**

अथवा इसी प्रकार श्रीमदाद्याचार्य निम्बार्क भगवान् द्वारा प्रणीत ''श्रीकृष्णप्रातःस्तवराज'' स्तोत्र में श्रीवृन्दावन का वही नित्यनिकुञ्ज रस का जो अलौकिक सौन्दर्य प्रतिपादन किया है, वह रसिक साधक भक्तजनों को निश्चित ही अपने अन्तः-करण में धारण करना चाहिए--

**प्रातःस्मरामि युगकेलिरसाभिषिक्तं वृन्दावनं सुरमणीयमुदारवृक्षम् ।**
**सौरीप्रवाहवृतमात्मगुणप्रकाशं युग्माङ्घ्रिरेणुकणिकाऽञ्चितसर्वसत्त्वम् ।।**

**नित्यनवयुगलकिशोरवृन्दावननिकुञ्जविहारिसर्वेश्वरश्यामा-श्यामश्रीराधाकृष्णयोर्नित्यनिकुञ्जललितलीलारसेन प्रतिपलमनिर्वच-नीयरूपेणाऽभिषिक्तमर्थाच्चतुर्दिक्षु परिव्याप्तम् । कल्पवल्लीस्वरूपं निर्मल-गभीरवारिधाराप्रवाहवत्याः श्रीयमुनाया दिव्यप्रवाहेण वृतं सुशोभितम् ।**

सौन्दर्य-माधुर्य-लावण्यद्यनन्तगुणकदम्बैरतिशयप्रकाशमानं श्रीराधा-निकुञ्जविहारियुगलचरणसरोरुहपरागपुञ्जकणैरभिषिक्ता नित्यसखी परिकरनिकरा परमरसिकभक्ताः सन्तः, शुक-पिक-सारिका-सारस-चातक-मयूरादि विविधविहगकुलानि मधुकराश्चाऽपि तत्रत्याः सर्वे जीवास्तथा कदम्ब-जम्बू-कदली-तमालाऽऽम्रादितरवः, केतकी-कुन्द-यूथिका-मालती-मल्लिकादिवल्लयः परमकृतार्थाः सौभाग्यान्विताः सञ्जाताः । एतादृशं सच्चिदानन्दमयं श्रीमद्वृन्दावनं प्रत्यहं प्रातः स्मरामि सुप्रभातवेलायामभिचिन्तयामीति संक्षिप्तो भावार्थः ।

नित्यनवयुगलकिशोर वृन्दावन निकुञ्जबिहारी सर्वेश्वर श्यामाश्याम श्रीराधाकृष्ण के नित्यनिकुञ्जललित लीलारस से प्रतिक्षण अलौकिक रूप से अभिव्यक्त अर्थात् चारों दिशाओं में व्याप्त, कल्पलतास्वरूप निर्मल, गम्भीर जलधारा प्रवाह वाली श्रीयमुना के दिव्य प्रवाह से परिवेष्टित एवं शोभायमान, सौन्दर्य-माधुर्य-लावण्य आदि अनन्त गुणसमूह से अत्यधिक प्रकाशमान, श्रीराधा-निकुञ्ज-विहारी के युगल चरण कमलों के परागपुञ्जकणों से अभिषिक्त नित्य सखी परिकर समूह, परम रसिक भक्तजन, सन्त, तोता-कोयल-मैना-मयूर आदि विविध पक्षी समूह और भ्रमर भी और वहाँ के सब प्राणी और कदम्ब-जम्बू-कदली-तमाल-आम्र आदि वृक्ष, केतकी-कुन्द-यूथिका-मालती-मल्लिका आदि लताएँ परम कृतार्थ एवं सौभाग्यान्वित हुए। ऐसा सच्चिदानन्दमय श्रीवृन्दावन का सदा प्रातः (सुप्रभातवेला में) स्मरण करता हूँ ।

एवं हि श्रीनिम्बार्कभगवता स्वप्रणीत ''श्रीराधाष्टक'' समग्रस्तोत्रे श्रीयुगलोपासनाया यद्दिव्यस्वरूपं प्रत्यपादि तदत्र श्लोक द्वयेनोपा-सनाभावः प्रतिपाद्यते--

इस प्रकार श्रीनिम्बार्क भगवान् द्वारा स्वप्रणीत श्रीराधाष्टक समग्र स्तोत्र में श्रीयुगल उपासना का जो दिव्य स्वरूप प्रतिपादित हुआ है उसमें से यहाँ दो श्लोकों के उपासना का भाव प्रतिपादन किया जाता है--

**व्रजन्तीं स्ववृन्दावने नित्यकालं**
**मुकुन्देन साकं विधायाङ्कमालम् ।**
**समामोक्ष्यमाणानुकम्पाकटाक्षैः**
**श्रियं चिन्तये सच्चिदानन्दरूपाम् ।।**

( श्रीराधाष्टकम्, श्लोक. ५ )

**श्रीमन्माधवमुकुन्द–भुवनमोहन–रसिकेश्वर–श्यामासुन्दर–श्रीकृष्ण–स्कन्धोपरि निजदक्षिणकरारविन्दं सन्निधाय परमाह्लादिनीशक्तिं नित्यनवकिशोरीं सर्वेश्वरीं सच्चिदानन्दरूपां श्रियं श्रीराधाप्रियां रसधाम्नि श्रीवृन्दावने निकुञ्जविहारिणा श्रीमुकुन्देन सार्द्धं व्रजन्तीं चिन्तये ध्याया–म्यर्थात्सततं स्मरामीति संक्षिप्त भावः ।**

श्रीमन्माधवमुकुन्दभुवनमोहन रसिकेश्वर श्यामसुन्दर श्रीकृष्ण के स्कन्ध पर अपना दक्षिण करकमल रखकर परमाह्लादिनी शक्ति नित्य नव–किशोरी सर्वेश्वरी सच्चिदानन्दरूपा श्रीराधाजी रसधाम श्रीवृन्दावन में निकुञ्जविहारी श्रीमुकुन्द के साथ विहार करती हुई का निरन्तर स्मरण करता हूँ ।

सदा राधिका नाम जिह्वाग्रतः स्यात्
सदा राधिकारूपमक्ष्यग्र आस्ताम् ।
श्रुतौ राधिकाकीर्तिरन्तः स्वभावे
गुणा राधिकायाः श्रिया एतदीहे ।।

--( श्रीराधाष्टकम्, श्लोक ८ )

**श्रीकृष्णाह्लादिनीनित्यनिकुञ्जेश्वरीसर्वेश्वरीश्रीराधायाः परम–मङ्गलमयदिव्यतमनाम नितरां जिह्वाऽग्रभागे प्रस्फुरतु । श्रीराधायामहा–मञ्जुलस्वरूपं नयनाऽग्रे सर्वदाऽऽविर्भवतु । श्रीराधाया दिव्ययशस्ताव त्सततं कर्णपुटे प्रगुञ्जतु । स्वान्ते च श्रियाः श्रीराधाया निरतिशय सौन्दर्य–माधुर्य–लावण्य–कारुण्यमार्दवादिदिव्यातिदिव्यतमा अनन्त–गुणकदम्बाः प्रतिपलमभिस्फुरन्तु । इत्येवाऽस्मदन्तरे परमोत्कण्ठा वरी–**

वर्तीति श्रीभगवन्निम्बार्काचार्यपादाः स्तोत्रेऽस्मिन्स्वकीयोपासनाऽभिलाषं प्रकटयन्ति ।

श्रीकृष्ण की आह्लादिनी नित्य निकुञ्जेश्वरी सर्वेश्वरी श्रीराधा का परम मङ्गलमय दिव्यतम नाम निरन्तर जिह्वा के अग्रभाग में स्फुरित हो । श्रीराधा का महामङ्गलस्वरूप नेत्रों के अग्रभाग में विराजमान हो । श्रीराधा का दिव्य यश निरन्तर कर्णपुट में गूंजता रहे और अपने अन्तःकरण में श्रीराधिका का अतिशय सौन्दर्य-माधुर्य-लावण्य-कारुण्यमार्दव आदि दिव्यातिदिव्यतम अनन्त गुणगण प्रतिक्षण स्फुरित होते रहें । यही हमारे अन्तः-करण में परम उत्कण्ठा है, इस प्रकार भगवान् निम्बार्काचार्यचरण इस स्तोत्र में अपनी उपासना की अभिलाषा प्रकट करते हैं ।

## श्रीभगवन्निम्बार्काचार्याणां व्रतादिविषये स्पर्शवेध ( कपालवेध ) सिद्धान्तः

श्रीहरिप्रियायुध सुदर्शनाऽवतारस्य सम्प्रदायस्याऽऽद्याचार्यवर्यस्य जगद्गुरोः श्रीनिम्बार्काचार्यपादस्यैकादश्यादिव्रतविषये यः कपालवेध-सिद्धान्तो वरीवर्ति तद्विषयेऽत्र किञ्चित्संक्षेपेण प्रख्याप्यते । स्पर्श-सङ्ग-शल्य-वेधक्रमेणैते चतुर्विधा वेधाः सन्ति तत्र तेषु स्पर्शाऽऽख्यं वेधं (कपालवेधं) स्वीकुर्वन्ति श्रीमदाद्याचार्यचरणाः । एकादशीव्रते किंवा श्रीभगवज्जयन्तीव्रते तिथ्या उदयकालोऽर्द्धरात्रौ ४५ पञ्चचत्वारिंशत्घटि-कायां प्रभवति, यथाहि व्याकरणपरम्परायां ''अष्टाध्यायी'' सूत्रपाठे ''अनद्यतने लुट्'' इति सूत्रेऽद्यतनकालस्य तथाऽनद्यतनकालस्य च परमश्रेष्ठतमं विवेचनं निर्दिष्टं तद्यथा ''अतीताया रात्रेः पश्चार्धेनाऽऽगा-मिन्याः पूर्वार्द्धेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः'' इति प्रति-पादितेन कालविवेचनं तु सुस्पष्टमेव । श्रीभगवन्निम्बार्काचार्यश्रीचरणानां

मते दशमी तिथिर्यदि पलमात्रमप्यर्द्धरात्रौ ४५ पञ्चचत्वारिंशत्घटिकाया अधिकं जायते तदैकादशीं परित्यज्य द्वादश्यां व्रतमाचरणीयम् । यथा–

श्रीहरिप्रिय आयुध सुदर्शनावतार सम्प्रदाय के आद्याचार्यवर्य जगद्गुरु श्रीनिम्बार्काचार्य चरणों का एकादशी आदि व्रत विषय में जो कपालवेध सिद्धान्त है, उस विषय में यहाँ कुछ संक्षेप में लिखा जा रहा है । स्पर्श-सङ्ग-शल्य-वेध क्रम से चार प्रकार के वेध हैं, उनमें से स्पर्श रूप वेध (कपालवेध) श्रीमद् आद्याचार्यचरण स्वीकार करते हैं । एकादशीव्रत अथवा श्रीभगवान् की जयन्ती-व्रत में तिथि का उदयकाल अर्द्धरात्रि ४५ घड़ी तक प्रभावी होता है । जैसे महर्षि पाणिनि ने 'अष्टाध्यायी' सूत्र पाठ में 'अनद्यतने लुट्' इस सूत्र में अद्यतन काल का और अनद्यतन काल का अतिश्रेष्ठ विवेचन किया है । यथा--बीती हुई रात्रि के परार्द्ध से आने वाली रात्रि के पूर्वार्द्ध के सहित जो काल है, वह अद्यतन और उससे भिन्न अनद्यतन है-ऐसा प्रतिपादित करने से काल विवेचन स्पष्ट है । श्रीभगवन्निम्बार्काचार्य चरणों के मत में दशमी तिथि यदि पलमात्र भी अर्द्धरात्रि ४५ घड़ी से अधिक होती है, तो एकादशी को छोड़कर द्वादशी में एकादशी का व्रत करना चाहिए । यथा--

अर्द्धरात्रमतिक्रम्य दशमी दृश्यते यदि ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।।

( कूर्म – पुराण )

अर्थादर्द्धरात्रमतिक्रम्य ४५ पञ्चचत्वारिंशद्घटिकानन्तरं दशमी तिथिः स्यात्तर्हि तत आगामिन्या एकादशीतिथ्याः स्पर्शो भवति । एतावताऽयं वेधः स्पर्श–वेध आहोस्वित्कपालवेधः प्रकथ्यते । अतस्तत्र पूर्वतिथिविद्धा ह्येकादशी सर्वथैवाऽग्राह्या भवति यथा हि--''श्रीनारद-पञ्चरात्रे प्रतिपादितं'' **''पूर्वविद्धतिथेस्त्यागो वैष्णवस्य हि लक्षणम्''** इति वचनानुसारेण पूर्वविद्धैकादशी त्याज्याऽस्ति शुद्धैकादशी ग्राह्या भवति एतत्प्रसङ्गे विशेषविवेचनं तु ''निम्बार्कव्रतनिर्णये'' 'औदुम्बरसंहितायाम्'' ''स्वधर्मामृतसिन्धौ'' ''वैष्णवसुरद्रुममञ्जर्याम्''

**तथाऽन्येषु च परमपुरातनस्वसाम्प्रदायिकविपुलप्रौढतमग्रन्थेषु परिवर्णितमस्ति। जिज्ञासुभिस्तत्रैवाऽवलोकनीयमितिपरमसंक्षिप्ताशयः।**

इस विवेचन से यह वेध 'स्पर्शवेध' अथवा 'कपालवेध' कहा जाता है । अतः पूर्वतिथि विद्धा एकादशी सर्वथा अग्राह्य है । इसी प्रकार 'श्रीनारद पञ्चरात्र' में भी प्रतिपादित है--

''पूर्वविद्धतिथेस्त्यागो वैष्णवस्य हि लक्षणम्'' । इस वचन के अनुसार पूर्वविद्धा एकादशी त्याज्य है, शुद्ध एकादशी ही ग्राह्य है ।

इस प्रसङ्ग में विशेष विवेचन तो 'निम्बार्क व्रत-निर्णय' में औदुम्बर संहिता में' 'स्वधर्मामृतसिन्धु में' 'वैष्णवसुरद्रुममञ्जरी' में और अन्य परम पुरातन स्वसाम्प्रदायिक अनेक प्रौढ ग्रन्थों में वर्णित है । विशेष-जिज्ञासुओं को उन ग्रन्थों का अवलोकन करना चाहिए ।

* * * *

**अथाऽत्रपरमाद्याचार्यवर्यैर्भगवच्छ्रीनिम्बार्काचार्यपादैरनेके ग्रन्थाः प्रणीतास्तेषु ग्रन्थेषु ये ग्रन्था: समुपलभ्यामाना: सन्ति, तेषाञ्च विवरणं निम्नरीत्याऽवधेयं प्राज्ञजनैस्तद्यथा--**

१. **वेदान्तपारिजातसौरभम्** श्रीब्रह्मसूत्रभाष्यं ( वृत्यात्मकम् )
२. श्रीमन्त्ररहस्यषोडशी श्रीगोपालमन्त्रराजव्याख्यानरूपोऽयं ग्रन्थः ।
३. श्रीप्रपन्नकल्पवल्ली श्रीमन्मुकुन्दशरणागतिमन्त्रार्थरूपात्मकोऽयं ग्रन्थः ।
४. **श्रीकृष्णप्रातःस्तवराजः** श्रीराधाकृष्णभक्तिरसपरकोऽयं ग्रन्थः ।
५. **श्रीराधाष्टकम्** श्रीराधा-माहात्म्यस्वरूपदर्शकोऽयं ग्रन्थः ।

अथ पूर्वाचार्यग्रन्थैर्निर्दिष्टाः श्रीभगवन्निम्बार्कविरचिता ग्रन्था अप्यासन्किन्तु कालप्रभावाद्-दौर्भाग्यवशाच्चेमे ग्रन्था अधुनाऽपि दृग्गोचरं नाऽऽयान्ति। यथाहि--

१. प्रपत्तिचिन्तामणिः
२. सदाचारप्रकाशः
३. गीतावाक्यार्थः

एवमेतत्त्रयाणां ग्रन्थानां विवरणं पूर्वाचार्यप्रवरश्रीसुन्दरभट्टाचार्यचरणानां तथा च जगद्विजयि-श्रीकेशवकाश्मीरिभट्टाचार्यपादानां ग्रन्थोक्तवचनैरवगम्यते, परमेते ग्रन्था सश्रममन्विष्यमाणा अपि नैवाऽधिगता भवन्ति ।

अब इसके पश्चात् यहाँ पर आद्याचार्यवर्य श्रीनिम्बार्क भगवान् द्वारा प्रणीत जो जो ग्रन्थ उपलब्ध हैं, उनका विवरण निम्न प्रकार से विद्वज्जनों को जानना चाहिये, यथा--

१. ''वेदान्त पारिजात सौरभ'' श्रीब्रह्मसूत्र भाष्य जो वृत्यात्मक रूप में प्रकाशित है ।
२. ''श्रीमन्त्ररहस्यषोडशी'' ''श्रीगोपालमन्त्रराज'' के व्याख्या स्वरूप यह ग्रन्थ है ।
३. ''श्रीप्रपन्नकल्पवल्ली'' यह ''श्रीमुकुन्दशरणागतिमन्त्र'' के व्याख्या रूपात्मक है ।
४. ''श्रीकृष्णप्रातःस्तवराज'' श्रीराधाकृष्ण भक्ति रस परक स्तवात्मक यह ग्रन्थ है ।
५. ''श्रीराधाष्टकम्'' श्रीराधा माहात्म्य स्वरूप दर्शक स्तव रूप यह दिव्य ग्रन्थ है ।

इस प्रकार परवर्ती पूर्वाचार्यों के ग्रन्थों से श्रीनिम्बार्क भगवान् द्वारा विरचित ग्रन्थों की जानकारी मिलती है किन्तु काल प्रभाव से दुर्भाग्यवश ये ग्रन्थ अद्यावधि पर्यन्त दृष्टिगत नहीं हुए हैं, यथा--

१. ''प्रपत्तिचिन्तामणि''
२. ''सदाचारप्रकाश''
३. ''गीतावाक्यार्थ''

इन ग्रन्थ त्रय का विवरण परमाचार्यवर श्रीसुन्दरभट्टाचार्यजी एवं जगद्विजयी श्रीकेशवकाश्मीरिभट्टाचार्यजी महाराज के ग्रन्थों से विदित होता है किन्तु शोध करने पर भी वे अप्राप्य हैं ।

## श्रीभगवन्निम्बार्काचार्यचरणानां विद्यमानकालः

श्रीनिम्बार्कसाम्प्रदायिकशास्त्रीयसिद्धान्तानुसारेण पुराणादि-शास्त्राऽऽधारेण श्रीभगवन्निम्बार्काचार्यस्याऽऽविर्भावो द्वापरान्ते कलियुगारम्भ-काले च समभवदिति निश्चप्रचम् । स्वसम्प्रदायैतिह्यपरम्परया तथा च शता-धिक पञ्चसहस्रतमेन श्रीनिम्बार्कगताब्देनाऽऽचार्यपरम्परयाऽपि द्वापरान्तसमये चैवाऽऽविर्भावकालो निर्धारितोऽस्ति । यद्यपि विभिन्नेतिहासशोधकर्तृणां श्रीनिम्बार्कविद्यमानकालविषये विविधविचाराः सन्ति । परमधिकांशत ऐतिह्यविदास्ते भ्रान्ता एव । श्रीनिम्बार्कसाहित्याऽनभिज्ञास्ते कथं याथातथ्यपूर्णं स्वीयविचारं प्रकटयितुं समर्थाः स्युः । डॉ. श्रीभाण्डारकरादिप्राचीनशोध-कर्तृभिर्या भ्रान्तिर्विहिता तदनुवर्तिभिः कैश्चिच्छोधपरायणैर्विद्वद्भिरपि तद्भ्रान्तिमवलम्ब्य श्रीभगवन्निम्बार्काचार्यसमयनिर्धारणप्रसङ्गे महती त्रुटिःकृतेति नाऽपरोक्षमिदं यथार्थतथ्यविद्भिर्विद्वद्भिः ।

श्रीभविष्योत्तरपुराण-वामनपुराणादिपरमपुरातनेषु शास्त्रेष्वपि श्री-निम्बार्कभगवतः साकल्येन वर्णनं समायाति । स्वसाम्प्रदायिक "श्रीनिम्बार्क-विक्रान्तिः" "औदुम्बरसंहिता" प्रभृतिविविधग्रन्थेष्वपि श्रीनिम्बार्कभगवतः पावनप्रसङ्गः समुपलभ्यते । "श्रीनिम्बार्कविक्रान्ति" ग्रन्थस्य नवति (९०) पृष्ठाङ्के सटिप्पणीभाषानुवादे 'श्रीवामनपुराण' विषये यल्लिखितमस्ति तदनु-सन्धानात्मकं प्रकरणं वरीवर्ति । सुतरां तावच्छोधमर्मज्ञैः प्राज्ञैर्नितरां गवेषणा-त्मकोऽयं विषयः साधुतयाऽन्वेष्टव्यः ।

श्रीमदाद्यशङ्कराचार्यचरणेन स्वकीयश्रीब्रह्मसूत्रभाष्येऽनेकेषु स्थलेषु श्रीमन्निम्बार्कसिद्धान्त-स्वाभाविकभेदाभेदस्य च खण्डनात्मिका चर्चा विहि-

ताऽथ च श्रीनिम्बार्कभाष्यस्य क्वचित्क्वचित्स्थलेषु समुद्धरणमपि तत्र संक्षेपेणाऽऽयाति । एतावताऽऽद्यशङ्कराचार्यात्प्राग्पूर्ववर्तित्वं समागच्छति श्रीभगवन्निम्बार्काचार्यपादस्य । श्रीनिम्बार्कभगवता स्वीय 'वेदान्तपारिजातसौरभाऽऽख्ये' 'ब्रह्मसूत्रभाष्ये' श्रीमदाद्यशंकराचार्यवर्यस्य कुत्राऽपि काऽपि चर्चा--नैव निगदिता । सुतरामेतेन स्पष्टं विज्ञायते, यन्निम्बार्काचार्यवर्यः श्रीशङ्कराचार्यस्य पूर्ववर्ती ध्रुवमासीदित्यत्र न कोऽपि सन्देहावसरः समुदेति ।

श्रीनिम्बार्कसम्प्रदायस्य मूर्द्धन्यमहामनीषिणा, अ. भा. श्रीनिम्बार्काचार्यपीठ-निम्बार्कतीर्थ ( सलेमाबाद ) किशनगढ़-अजमेर (राजस्थान)स्य च प्रचाराधिकारिणा पं. श्रीव्रजवल्लभशरणवेदान्ताचार्य-पञ्चतीर्थ-निम्बार्कभूषणेन ''श्रीयुगलशतक'' वाणीग्रन्थस्य सर्वप्रथममुद्रितसंस्करणभूमिकायां श्रीनिम्बार्काचार्यसमयसमीक्षाप्रसङ्गे विस्तृतरूपेण श्रीमदाद्याचार्यवर्यश्रीभगवन्निम्बार्काचार्यविद्यमानकार्यकालः सप्रमाणं निर्धारितो वरीवर्ति, सुतरां शोधकर्तृभिर्विद्वन्महाभागैस्तत्रैवाऽवलोकनीयम् । अथाऽन्यत्रापि स्वसाम्प्रदायिकविभिन्नशोधग्रन्थैस्तथाऽऽचार्यपीठस्य श्रीवृन्दावनस्य श्री 'श्रीजी' बृहत्कुञ्जसंस्थानात्सम्प्रकाशित 'श्रीसर्वेश्वर' मासिकपत्रस्य विविधविशेषाङ्कैरेवञ्च श्रीनिम्बार्काचार्यपीठस्थ ''श्रीनिम्बार्क'' पाक्षिकपत्रस्य विशेषाङ्केराहोस्विद्विभिन्नग्रन्थैश्च श्रीभगवन्निम्बार्काचार्यश्रीचरणानामाविर्भावकालनिर्णयः सम्यक्तयाऽवबोद्धव्यः शोधरतैर्विद्वद्भिः ।

वाराणसीवास्तव्येन डॉ. श्रीबलदेव उपाध्यायेन ''भागवतसम्प्रदाया''ऽऽख्ये ग्रन्थे श्रीनिम्बार्कभगवतः परमप्राचीनता निर्धारिताऽस्ति । श्रीमद्भागवते श्रीनारदभक्तिसूत्रेऽपि च श्रीमदारुणिरिति-ऋषिरूपेण श्रीनिम्बार्कभगवत एव स्पष्टतया संकेतो वर्तते । भगवतः श्रीकृष्णस्य प्रपौत्र श्रीवज्रनाभसेनसमये भाष्यकारः श्रीश्रीनिवासाचार्यवर्यः श्रीनिम्बार्कभगवतः पावनशरणमाजगामेतिपुरातनस्वसम्प्रदायपरकग्रन्थेषु वर्णितमस्ति । एतावताऽपि श्रीनिम्बार्कसमयोऽतीव प्राचीनतमः ।

सम्प्रदायेऽस्मिन्संस्कृत-हिन्दी-व्रजभाषा-बङ्गभाषास्वपि विपुलं साहित्यमुपलभ्यते, तत्र बङ्गभाषासु व्रजविदेहीचतुःसम्प्रदायश्रीमहन्तश्रीधनञ्जयदास(जी) काठियाबाबामहाभागेन तथा तद्गुरुवर्यश्रीसन्तदास(जी) काठियाबाबामहाराजेनाऽपि श्रीनिम्बार्कभगवतः कार्यकालविषये बहुशो लिखितमिति सर्वविदितमस्ति । श्रीवृन्दावनवंशीवटवास्तव्येन परमवयोवृद्धेन पण्डितप्रवरश्रीकिशोरीदासजीमहाभागेन, तथैव परममूर्द्धन्यप्रकाण्डपण्डितश्रीमदमोलकरामशास्त्रिणा, श्रीमद्भागवतप्रवचनप्रवीणेन श्रीनिम्बार्कराद्धान्तप्रचारतत्परेण पं. श्रीविहारीदास(जी)त्यागिना, सम्प्रदायसाहित्यमुद्रणप्रकाशनपरायणेन बाबा-श्रीरामचन्द्रदास(जी)महानुभावेन, न्यायवेदान्तादिपरमविदुषाऽतिवयोवृद्धेन श्रीवैष्णवदासजीशास्त्रिणा, स्वसम्प्रदायपरकविभिन्नग्रन्थकर्त्रा श्रीमद्धरिप्रियाशरणदेव(जी)महाराज (पं. श्रीदुलारेप्रसादजी शास्त्री) प्रखरविदुषा, श्रीवृन्दावनस्थपानीघाटनिवासिना महन्तवर्यश्रीकल्याणदास(जी) विपश्चिता, पं. श्रीराधिकादासजीपरमप्रेक्षावताऽपि, विद्वद्धौरेयपण्डितप्रवरश्रीरामप्रतापशास्त्रिणा तथा च तदात्मजेन प्रखरमतिमता डा. श्रीरसिकविहारिशास्त्रिमहाभागेनाऽपि परश्चाऽखिलभारतीयश्रीनिम्बार्काचार्यपीठव्यवस्थाप्रचाराधिकारिणा निम्बार्कभूषण पं. श्रीव्रजवल्लभशरणजीवेदान्ताचार्यपञ्चतीर्थेन, आचार्यपीठस्यैवाऽपराधिकारिणा पं. श्रीलाडिलीशरण(जी)वर्येण, तथा चाऽर्यपीठस्य प्रबन्धाधिकारिणा श्रीवियोगीविश्वेश्वरेण, मिथिलानिवासिना विद्वद्धौरेयेण पं. श्रीभगीरथझा-न्यायवेदान्ताचार्येण, जयपुरवासिना पं. श्रीरामगोपालशास्त्रिमहाभागेन, श्रीनिम्बार्काचार्यपीठप्रचारमन्त्रिणा पं. श्रीगोविन्ददासजी 'सन्त'-निम्बार्कभूषण-पुराणतीर्थद्वैताद्वैतविशारदेन, पण्डितप्रवरश्रीबदरीप्रसादशास्त्रिणा, डा. श्रीनारायणदत्तजीशर्मणा, मूर्द्धन्यमनीषिणा डा. श्रीवासुदेवकृष्णचतुर्वेदिना, डा. श्रीरामप्रसादजीशर्मणा, श्रीवृन्दावन वास्तव्य-डा० श्रीप्रेमनारायणश्रीवास्तवेन विदुषा तथैवंविधानेकविशिष्टविद्वन्महानुभावैः श्रीनिम्बार्कभवगत्परक-शोधकर्मणि तथा च तत्सिद्धान्तपरकविविधग्रन्थप्रणयनप्रकाशनादिकार्ये यथेष्टं प्रयासो

विहितस्तत्परमादर्शमयो वरीवर्ति । यद्यप्यनेके विद्वद्वरेण्या महानुभावाः श्रीनिम्बार्कभगवत्परकग्रन्थप्रणयननिरता उत तत्पावनचरितस्य विभिन्नमहत्व-पूर्णप्रसङ्गान्वेषणाऽभिरताः सन्ति । अथाऽग्रे ये कतिपयवर्षेभ्यः प्राग्दिवंगता-स्तथा ये साम्प्रतं वर्तमाना वर्तन्ते, तेषां प्रसङ्गवशाच्चाऽत्र समुल्लेखः सर्वेषामवबोधार्थं सम्पाद्यते । तद्यथा--

श्रीनिम्बार्क सम्प्रदाय के शास्त्रीय सिद्धान्त के अनुसार और पुराणादि शास्त्रों के आधार पर श्रीभगवन्निम्बार्काचार्य का आविर्भाव द्वापरयुग के अन्त एवं कलियुग के आरम्भकाल में हुआ जो निश्चयात्मक है । स्वसम्प्रदाय की इतिहास परम्परा एवं आचार्य परम्परा से श्रीनिम्बार्क भगवान् का गताब्द ५१०० वर्ष होते हैं इसीलिये द्वापरान्त समय में आपका आविर्भाव काल निर्धारित है । यद्यपि अनेक शोधकर्ताओं के श्रीनिम्बार्क भगवान् के विद्यमान काल के सम्बन्ध में विविध विचार हैं किन्तु इतिहास शोधकर्ता अधिकांश रूप में भ्रान्त हैं । श्रीनिम्बार्क साहित्य से अनभिज्ञ वे लोग कैसे यथार्थ स्वरूप (पुरातन इतिहास) के सम्बन्ध में किस प्रकार तथ्यपूर्ण अपने विचार प्रकट करने में समर्थ हो सकते हैं । डा० श्रीभाण्डारकर आदि प्राचीन शोधकर्ताओं ने जो भ्रान्ति उत्पन्न की उसी का अनुसरण करने वाले शोधकर्ता विद्वानों ने उसी भ्रान्ति का अवलम्ब लेकर श्रीनिम्बार्क भगवान् के समय निर्धारण में महती त्रुटि की है जो यथार्थ तत्त्ववेता विद्वज्जनों से अज्ञात नहीं है ।

श्रीभविष्यपुराण, श्रीवामनपुराण आदि प्राचीनतम शास्त्रों में श्रीनिम्बार्क भगवान् का बड़े ही सुन्दर रूप से वर्णन मिलता है । स्वसाम्प्रदायिक "श्रीनिम्बार्कविक्रान्ति" "औदुम्बरसंहिता" आदि अनेक ग्रन्थों में श्रीनिम्बार्क भगवान् विषयक परम पावन प्रसङ्ग वर्णित है । "श्रीनिम्बार्कविक्रान्ति" ग्रन्थ पृष्ठ ९० के टिप्पणी भाषानुवाद में "श्रीवामनपुराण" के विषय में जो उल्लिखित है, वह अनुसन्धान करने योग्य है, इसलिये शोधकर्ता विद्वानों द्वारा सम्यक् प्रकार से अन्वेषण किया जाना अपेक्षित है ।

श्रीआद्यशंकराचार्य चरणों ने अपने ''श्रीब्रह्मसूत्र'' भाष्य में अनेक स्थलों पर श्रीभगवन्निम्बार्काचार्य के स्वाभाविक भेदाभेद सिद्धान्त की खण्डनात्मक चर्चा की है तथा श्रीनिम्बार्क भगवान् के भाष्य का उद्धरण भी कहीं-कहीं पर संक्षेप में दिया है, इससे स्पष्ट है कि श्रीनिम्बार्क भगवान् श्रीशंकराचार्यजी से पूर्ववर्ती थे । श्रीनिम्बार्क भगवान् ने अपने ''वेदान्त पारिजात सौरभ'' नामक ब्रह्मसूत्र भाष्य में श्रीमद् आद्यशंकराचार्यजी की कहीं पर भी चर्चा नहीं की है, अतएव यह सुस्पष्ट है कि श्रीशंकराचार्यजी से पूर्ववर्ती श्रीनिम्बार्काचार्यजी थे वस्तुतः इसमें किसी भी प्रकार का सन्देह नहीं है ।

श्रीनिम्बार्क सम्प्रदाय के मूर्द्धन्य मनीषी अखिल भारतवर्षीय श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ (सलेमाबाद) किशनगढ-अजमेर (राजस्थान) के प्रचाराधिकारी पं० श्रीव्रजवल्लभशरणजी वेदान्ताचार्य पञ्चतीर्थ निम्बार्कभूषण ने ''श्रीयुगलशतक'' वाणी ग्रन्थ के सर्वप्रथम मुद्रित संस्करण की भूमिका में ''श्रीनिम्बार्काचार्य समय समीक्षा'' प्रसंग में विस्तृत रूप से श्रीमदाद्याचार्यवर्य श्रीभगवन्निम्बार्काचार्य का विद्यमान कार्यकाल सप्रमाण निर्धारित किया है जो शोधकर्ता विद्वानों द्वारा अवलोकनीय है । तथा इसके अतिरिक्त अन्यत्र भी स्वसाम्प्रदायिक विभिन्न शोधग्रन्थों में एवं श्रीनिम्बार्काचार्यपीठ के वृन्दावनस्थ श्री श्रीजी की बड़ी कुंज से प्रकाशित ''श्रीसर्वेश्वर'' मासिक पत्र के अनेक विशेषाङ्कों से और श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ (सलेमाबाद) से प्रकाशित ''श्रीनिम्बार्क'' पाक्षिक पत्र के विशेषाङ्कों एवं अन्य मुद्रित ग्रन्थों से श्रीभगवन्निम्बार्काचार्य का आविर्भाव काल निर्णय का परिज्ञान शोध परायण विद्वज्जनों को करना चाहिये ।

वाराणसी वास्तव्य डा० श्रीबलदेव उपाध्याय ने 'भागवत-सम्प्रदाय' ग्रन्थ में श्रीनिम्बार्क भगवान् की परम प्राचीनता निर्धारित की है । श्रीमद्भागवत, श्रीनारदभक्तिसूत्र ग्रन्थ में श्रीमद्आरुणि ऋषिरूप में श्रीनिम्बार्क भगवान् का ही स्पष्ट संकेत है । भगवान् श्रीकृष्ण के प्रपौत्र श्रीवज्रनाभसेन के समय में

वेदान्तकौस्तुभ भाष्यकार श्रीनिम्बार्काचार्य के पट्टशिष्य श्रीनिम्बार्काचार्य श्री-श्रीनिवासाचार्यवर्य श्रीनिम्बार्क भगवान् के पावन शरण में शरणागत हुए जो स्वसाम्प्रदायिक ग्रन्थों में वर्णित है, इससे भी श्रीनिम्बार्क भगवान् का समय अत्यन्त प्राचीनतम है ।

इस सम्प्रदाय में संस्कृत-हिन्दी-व्रजभाषा-बङ्गभाषा में विपुल साहित्य मिलता है । बङ्गभाषा में व्रजविदेही चतुःसम्प्रदाय श्रीमहन्त श्रीधनञ्जयदासजी काठिया बाबा तर्कतर्कतीर्थ के गुरुवर्य श्रीसन्तदासजी काठिया बाबा महाराज ने भीं श्रीनिम्बार्क भगवान् के कार्यकाल के विषय में बहुत कुछ उल्लेख किया है जो सर्वविदित है । श्रीवृन्दावन के वंशीवट निवासी परम वयोवृद्ध पण्डितप्रवर श्रीकिशोरदासजी महाराज ने तथा परम मूर्द्धन्य प्रकाण्डपण्डित श्रीअमोलक-रामशास्त्रीजी, श्रीमद्भागवत कथा प्रवचन प्रवीण श्रीनिम्बार्क सिद्धान्त प्रचार में सदा तत्पर पं० श्रीविहारीदासजी त्यागी, स्वसम्प्रदाय साहित्य के मुद्रण एवं प्रकाशन में सदा तत्पर, बाबा श्रीरामचन्द्रदासजी महाराज ने, न्यायवेदान्त के महान् विद्वान् श्रीवैष्णवदासजी शास्त्री, स्वसम्प्रदाय के विविध ग्रन्थ के प्रणेता प्रकाण्ड विद्वान् श्रीहरिप्रियाशरणजी महाराज (पं. श्रीदुलारेप्रसादजी शास्त्री), श्रीवृन्दावनस्थ पानीघाट निवासी महन्तवर्य विद्वद्वरेण्य श्रीकल्याण-दासजी महाराज, महामनीषी पं. श्रीराधिकादासजी, ब्यावर राजस्थान निवासी विद्वन्मूर्द्धन्य पण्डितप्रवर श्रीरामप्रतापजीशास्त्री और अ० भा० श्रीनिम्बा-र्काचार्यपीठ के प्रचाराधिकारी निम्बार्कभूषण पं. श्रीव्रजवल्लभशरणजी वेदान्ता-चार्य पंचतीर्थ, आचार्यपीठ के ही प्रबन्धाधिकारी श्रीवियोगीविश्वेश्वरजी, मिथिला निवासी विद्वद्वर्य्य पं. श्रीभगीरथ झा न्यायवेदान्ताचार्य, जयपुर निवासी पं. श्रीरामगोपालजी शास्त्री, श्रीनिम्बार्काचार्यपीठ के प्रचारमन्त्री पं. श्री गोविन्ददासजी 'सन्त' निम्बार्कभूषण पुराणतीर्थ द्वैताद्वैत विशारद, पण्डितवरेण्य श्रीबदरीप्रसादजी शास्त्री, डा. श्रीनारायणदत्तजी शर्मा, मथुरा वास्तव्य डा. श्रीवासुदेवकृष्णजी चतुर्वेदी, कृष्णगढ निवासी डा. श्रीरामप्रसादजी शर्मा, श्रीवृन्दावन वास्तव्य डा. श्रीप्रेमनारायणजी श्रीवास्तव आदि अनेक विशिष्ट

विद्वन्महानुभावों ने श्रीनिम्बार्क भगवान् परक शोधकार्य में तथा उनके सिद्धान्त विषयक ग्रन्थों के प्रणयन, मुद्रण, प्रकाशन इत्यादि कार्यों में यथेष्ट प्रयास किया जो निश्चय ही परम आदर्शमय है । यद्यपि अनेक विद्वद्वरेण्य महानुभाव श्रीनिम्बार्क भगवान् परक ग्रन्थ रचना में संलग्न तथा उनके पावन चरित के विभिन्न महत्वपूर्ण प्रसङ्गों के अन्वेषण में तत्पर हैं। अब इसके अनन्तर आगे कतिपय वर्षों से जो दिवंगत हो गये अथवा जो वर्तमान में श्रीनिम्बार्क भगवान् के समय विषयक शोधकार्य में संलग्न शोधकर्ता हैं उनका प्रसङ्गवशात् यहाँ उल्लेख सबके हितार्थ करना आवश्यक समझा है -यथा--

१. वेदान्त पारिजात सौरभ--डॉ. रमाबोस चौधरी (कलकत्ता)
२. श्रीनिम्बार्क सम्प्रदाय और उसके कृष्णभक्त हिन्दी कवि--स्व. डॉ. श्री नारायणदत्त शर्मा ( मथुरा)
३. श्रीपरशुरामदेवाचार्य और उनका साहित्य--डॉ. श्रीरामप्रसाद शर्मा ( किशनगढ - राजस्थान )
४. श्रीस्वामी हरिदासजी महाराज--डॉ. श्रीगोपालदत्त ( मथुरा )
५. श्रीहरिव्यासदेवाचार्य महाराज के शिष्य श्रीलक्ष्मीदासजी का--भाषा भागवत दशमस्कन्ध--डॉ. श्रीमुरारीलाल ( सुरस )
६. भगवान् श्रीनिम्बार्काचार्य और उनका स्वाभाविक द्वैताद्वैत सिद्धान्त--डॉ. श्रीअमरनाथ भट्टाचार्य ( कलकत्ता )
७. युगलकिशोर श्रीराधामाधवपरक विभिन्न ग्रन्थों के प्रणेता--डॉ. श्रीरसिक-विहारी जोशी, ब्यावर ( निवासी ) दिल्ली
८. कृष्णभक्ति काव्य में सखीभाव और उनका स्वाभाविक द्वैताद्वैत सिद्धान्त-डॉ. श्रीशरणविहारी गोस्वामी ( वृन्दावन )
९. महाकवि श्रीरसिकगोविन्द--डॉ. श्रीसुन्दरलाल डोमाल ( दिल्ली )
१०. वेदान्तकौस्तुभ भाष्य--डॉ. श्रीतृप्ताकुमारी बजाज ( दिल्ली )
११. श्रीनिम्बार्काचार्य और उनका द्वैताद्वैत सिद्धान्त--डॉ. श्रीमदनलाल अग्रवाल ( सादाबाद )
१२. द्वैताद्वैतमत का तात्त्विक विवेचन--डॉ. श्रीप्रेमप्रकाश गुप्ता (जबलपुर)

१३. श्रीपरशुरामसागर का काव्यालोचन एवं पाठालोचन--डॉ. श्रीद्वारका-प्रसाद मित्तल
१४. श्रीविहारिणदेवजी का साहित्य--डॉ. श्रीलोकेन्द्र शर्मा ( एटा )
१५. श्रीहरिव्यासदेवाचार्य--डॉ. श्रीप्रेमनारायण श्रीवास्तव
१६. श्रीमद्भागवत--डॉ. श्रीवासुदेवकृष्ण चतुर्वेदी ( मथुरा )
१७. श्रीपरशुरामदेवाचार्यजी महाराज--डॉ. श्रीकुञ्जविहारी शुक्ल (झांसी)
१८. श्रीसुन्दरसखी (सुन्दरलाल) और उनकी हिन्दी रचना--डॉ. श्रीमहादेव विष्णु गोविलकर ( नासिक )
१९. श्रीहरिव्यासदेवाचार्य और उनकी 'महावाणी'--डॉ. श्रीराजेन्द्र गौतम ( वृन्दावन )
२०. हिन्दी साहित्य को वृन्दावन की देन--डॉ. श्रीगोविन्द शर्मा (वृन्दावन)
२१. श्रीवृन्दावनदेवाचार्य--डॉ. श्रीऋषिनारायण पावन ( वाराणसी )
२२. श्रीनिम्बार्क सम्प्रदाय के सन्दर्भ में श्रीहरिव्यासदेव एक अध्ययन--डॉ. श्रीकुमारी विमला भास्कर ( दिल्ली )
२३. श्रीरूपरसिकदेवजी--डॉ. श्रीचन्द्रकिशोर पाठक ( मथुरा )
२४. श्रीनिम्बार्क दर्शन का समीक्षात्मक अध्ययन--डॉ. म. श्रीवृन्दावन-विहारीदास ( वाराणसी )
२५. श्रीस्वामी पीताम्बरदेव : व्यक्तित्व एवं कृतित्व--डॉ. श्रीरानी कमला घोष ( वृन्दावन )
२६. श्रीस्वामी रसिकदेव : व्यक्तित्व एवं कृतित्व--डॉ. शशि वर्मा (वृन्दावन)
२७. श्रीमाधवदासजी अलीमाधुरी : जीवनी और साहित्य--डॉ. श्रीराजन-देवी ( होडल )
२८. किशनगढ़ की भक्त कवियित्री सुन्दरकुंवरिः व्यक्तित्व एवं कृतित्व--डॉ. श्रीव्रजलता अरोडा ( वृन्दावन - उ० प्र० )
२९. व्रजभाषा लोक कवि तुलाराम : जीवनी और साहित्य--डॉ. श्रीअशोक कुमार सोरोत वनचारी ( हरियाणा )
३०. श्रीवृन्दावनदेवाचार्य और उनकी गीतामृत गंगा--डॉ. श्रीजयकिशोर गोडोता ( हरियाणा )

३१. स्वामी चरणदास जीवनी और साहित्य--डॉ. श्रीसुशीला देवी
( फतेहपुर - उ० प्र० )

३२. कविवर लाल बलवीर जीवनी और साहित्य--डॉ. श्रीकमलसिंह
( फतेहपुर - उ० प्र० )

३३. अनन्त श्रीविभूषित जगद्गुरु निम्बार्काचार्य श्री श्रीजी श्रीराधासर्वेश्वरशरणदेवाचार्य और उनका श्रीराधासर्वेश्वरशतक--श्रीकेशवदेव शर्मा

३४. निम्बार्क सम्प्रदाय के कवि कृष्णदास : व्यक्तित्व एवं कृतित्व--श्रीगायत्री चावडा ( उदयपुर - राजस्थान )

३५. अष्टछाप के कृष्णदास और निम्बार्क-सम्प्रदाय के कृष्णदास के काव्य का तुलनात्मक अध्ययन--श्रीकमला दुबे ( बरेली - उ० प्र० )

३६. श्रीरसिकगोविन्द : जीवनी और साहित्य--श्रीसत्यपालसिंह ( मेरठ )

३७. श्रीगोविन्दशरणदेवाचार्य जीवनी और साहित्य--श्रीसन्तोष कुमारी
( होडल - उ० प्र० )

३८. हरिदासी-परम्परा के अष्टाचार्येतर काव्य का साहित्यिक मूल्याङ्कन--कु० श्रीअलका उपाध्याय ( रोहतक - हरियाणा )

३९. अनन्त श्रीविभूषित निम्बार्कपीठस्थ जगद्गुरु श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज का व्यक्तित्व एवं कृतित्व--डॉ. परमानन्द शर्मा
( तेवड़ी - जयपुर )

४०. श्रीमद्भागवते निम्बार्कवेदान्तस्य समन्वयः, डा. स्वामी द्वारकादास काठिया बाबा सुखचर जि० उत्तर चौबीस परगना ( पश्चिम बंगाल )

४१. श्रीनारायण स्वामी-जीवनी और साहित्य डा. कुमारी राखी अबरोल, वृन्दावन-मथुरा ( उ० प्र० )

४२. जगद्गुरु निम्बार्काचार्य श्री 'श्रीजी' श्रीराधासर्वेश्वरशरणदेवाचार्य-व्यक्तित्व एवं कृतित्व--डा. उषा चौधरी-वृन्दावन, मथुरा ( उ० प्र० )

४३. जगद्गुरु निम्बार्काचार्यपीठाधीश्वर श्री 'श्रीजी' श्रीराधासर्वेश्वरशरणदेवाचार्य प्रणीत स्तव साहित्य का अध्ययन-- पं. रामस्वरूप गौड़
( मोखमपुरा - जयपुर )

*

# आचार्य - परम्परा

| आचार्य नामावली | सखीस्वरूप नामावली | उत्सव मासतिथि |
|---|---|---|
| १. श्रीहँस भगवान् | -- | कार्तिक शु० ९ |
| २. श्रीसनकादि भगवान् | (हरिणी आदि) | कार्तिक शु० ९ |
| ३. देवर्षि श्रीनारद भगवान् | (मुग्धादि) | मार्गशीर्ष शु० १२ |
| ४. श्रीसुदर्शनचक्रावतार जगद्गुरु श्रीभगवन्निम्बार्काचार्य | (श्रीरंगदेवी) | कार्तिक शु० १५ |
| ५. 'वेदान्तकौस्तुभ' भाष्यकार पाञ्चजन्य शंखावतार श्री श्रीनिवासाचार्यजी | (नव्यवासा) | माघ शु० ५ |
| ६. श्रीविश्वाचार्यजी | (विश्वाभा) | फाल्गुन शु० ४ |
| ७. श्रीपुरुषोत्तमाचार्यजी | (उत्तमा) | चैत्र शु० ९ |
| ८. श्रीवलासाचार्यजी | (विलासा) | वैशाख शु० ८ |
| ९. श्रीस्वरूपाचार्यजी | (सरसा) | ज्येष्ठ शु० ७ |
| १०. श्रीमाधवाचार्यजी | (मधुरा) | आषाढ शु० १० |
| ११. श्रीवलभद्राचार्यज। | (भद्रा) | श्रावण शु० ३ |
| १२. श्रीपद्माचार्यजी | (पद्मा) | भाद्रपद शु० १२ |
| १३. श्रीश्यामाचार्यजी | (श्यामा) | आश्विन शु० १३ |
| १४. श्रीगोपालाचार्यजी | (शारदा) | भाद्रपद शु० ११ |
| १५. श्रीकृपाचार्यजी | (कृपाला) | मार्गशीर्ष शु० १५ |
| १६. जाह्नवी भाष्यकार श्रीदेवाचार्यजी | (देवदेवी) | माघ शु० ५ |
| १७. सेतुका-व्याख्याकार श्रीसुन्दरभट्टाचार्यजी | (सुन्दरी) | मार्गशीर्ष शु० २ |
| १८. श्रीपद्मनाभ भट्टाचार्यजी | (पद्मालया) | वैशाख कृ० ४ |
| १९. श्रीउपेन्द्र भट्टाचार्यजी | (इन्दिरा) | चैत्र कृ० ३ |
| २०. श्रीरामचन्द्रभट्टाचार्यजी | (रामा) | वैशाख कृ० ७ |
| २१. श्रीवामन भट्टाचार्यजी | (वामा) | ज्येष्ठ कृ० ६ |
| २२. श्रीकृष्णभट्टाचार्यजी | (कृष्णा) | आषाढ कृ० ९ |
| २३. श्रीपद्माकरभट्टाचार्यजी | (पद्माभा) | आषाढ कृ० ८ |
| २४. श्रीश्रवणभट्टाचार्यजी | (श्रुतिरूपा) | कार्तिक कृ० ९ |
| २५. श्रीभूरिभट्टाचार्यजी | (भगवती) | आश्विन कृ० १० |

| आचार्य नामावली | सखीस्वरूप नामावली | उत्सव मासतिथि |
|---|---|---|
| २६. श्रीमाधवभट्टाचार्यजी | (माधवी) | कार्तिक कृ० ११ |
| २७. श्रीश्यामभट्टाचार्यजी | (असिता) | चैत्र कृ० १२ |
| २८. श्रीगोपालभट्टाचार्यजी | (गौराङ्गी) | पौष कृ० ११ |
| २९. श्रीवलभद्रभट्टाचार्यजी | (वल्लभा) | माघ कृ० ११ |
| ३०. श्रीगोपीनाथभट्टाचार्यजी | (गौरांगी) | श्रावण शु० ७ |
| ३१. श्रीकेशवभट्टाचार्यजी | (केशी) | चैत्र शु० १ |
| ३२. श्रीगांगलभट्टाचार्यजी | (पवित्रा) | चैत्र कृ० २ |
| ३३. प्रभावृत्ति व्याख्याकार जगद्विजयी श्रीकेशवकाश्मीरिभट्टाचार्यजी | (कुंकुमांगी) | ज्येष्ठ शु० ४ |
| ३४. व्रजभाषा-आदिवाणी 'श्रीयुगलशतक' प्रणेता श्रीश्रीभट्टाचार्यजी | (हितू) | आश्विन शु० २ |
| ३५. 'श्रीमहावाणी' निकुंजरसग्रन्थकार श्रीहरिव्यासदेवाचार्यजी | (हरिप्रिया) | कार्तिक कृ० ११ |
| ३६. 'श्रीपरशुरामसागर' वाणी ग्रन्थ-रचयिता-श्रीपरशुरामदेवाचार्यजी | (परमा) | भाद्रपद कृ० ५ |
| ३७. श्रीहरिवंशदेवाचार्यजी | (हितप्रवीणा) | मार्गशीर्ष कृ० ४ |
| ३८. श्रीनारायणदेवाचार्यजी | (नित्यनवीना) | पौष शु० ९ |
| ३९. 'श्रीगीतामृतगंगा' ग्रन्थकार श्रीवृन्दावनदेवाचार्यजी | (मनमंजरी) | भाद्रपद कृ० १३ |
| ४०. श्रीगोविन्ददेवाचार्यजी | (गौरांगी) | कार्तिक कृ० ५ |
| ४१. 'श्रीगोविन्दवाणी' ग्रन्थकार श्रीगोविन्दशरणदेवाचार्यजी | (गुणमंजरी) | कार्तिक कृ० ८ |
| ४२. श्रीसर्वेश्वरशरणदेवाचार्यजी | (रूपमंजरी) | पौष कृ० ६ |
| ४३. श्रीनिम्बार्कशरणदेवाचार्यजी | (निकुंजमंजरी) | ज्येष्ठ शु० ६ |
| ४४. श्रीव्रजराजशरणदेवाचार्यजी | (वंशीप्रिया) | ज्येष्ठ शु० ५ |
| ४५. श्रीगोपीश्वरशरणदेवाचार्यजी | (गोपीवल्लभा) | माघ कृ० १० |
| ४६. श्रीघनश्यामशरणदेवाचार्यजी | (घनश्यामा) | आश्विन कृ० ६ |
| ४७. श्रीबालकृष्णशरणदेवाचार्यजी | (बालवल्लभा) | चैत्र कृ० १३ |
| ४८. श्रीराधासर्वेश्वरशरणदेवाचार्यजी | (वर्तमान) | ज्येष्ठ शु० २ |

*

श्रीसुदर्शनचक्रावतार आद्याचार्य जगद्गुरु श्रीभगवन्निम्बार्काचार्य प्रणीत-

# ॥ वेदान्तदशश्लोकी ॥

जीवात्मस्वरूपम् ( चित्स्वरूपम् )

ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः ॥१॥
अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् ।
मुक्तञ्च बद्धं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम् ॥२॥

अचित्स्वरूपम् ( जगत्स्वरूपम् )

अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनं मतम् ।
मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र ॥३॥

ब्रह्म-स्वरूपम् ( परमात्मस्वरूपम् )

स्वभावतोऽपास्तसमस्तदोष-मशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥४॥
अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम् ॥५॥

उपासना

उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ।
सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे ॥६॥

ब्रह्मात्मकता

सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ।
ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपताऽपि श्रुतिसूत्रसाधिता ॥७॥

शरणागतिः

नान्या गतिः कृष्णपदारविन्दात् संदृश्यते ब्रह्मशिवादिवन्दितात् ।
भक्तेच्छयोपात्तसुचिन्त्यविग्रहादचिन्त्यशक्तेरविचिन्त्यसाशयात् ॥८॥

पराऽपराभक्तिः

कृपास्य दैन्यादियुजि प्रजायते यया भवेत्प्रेमविशेषलक्षणा ।
भक्तिर्ह्यनन्याधिपते र्महात्मनः सा चोत्तमा साधनरूपिकाऽपरा ॥९॥

अर्थपञ्चक-विवेक

उपास्यरूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम् ।
विरोधिनो रूपमथैतदाप्तेर्ज्ञेया इमेऽर्था अपि पञ्च साधुभिः ॥१०॥

श्रीसुदर्शनचक्रावतार आद्याचार्य जगद्गुरु श्रीभगवन्निम्बार्काचार्य प्रणीत-

## ॥ श्रीकृष्णप्रातःस्तवराजः ॥

प्रातः स्मरामि युगकेलिरसाभिषिक्तं वृन्दावनं सुरमणीयमुदारवृक्षम् ।
सौरीप्रवाहवृतमात्मगुणप्रकाशं युग्माङ्घ्रिरेणुकणिकाञ्चितसर्वसत्त्वम् ॥१॥
प्रातः स्मरामि दधिघोषविनीतनिद्रं निद्रावसानरमणीयमुखानुरागम् ।
उन्निद्रपद्मनयनं नवनीरदाभं हृद्यानवद्यललनाञ्चितवामभागम् ॥२॥
प्रातर्भजामि शयनोत्थित युग्मरूपं सर्वेश्वरं सुखकरं रसिकेशभूपम् ।
अन्योन्यकेलिरसचिह्नसखीदृगौघं सख्यावृतं सुरतकाममनोहरं च ॥३॥
प्रातर्भजे सुरतसारपयोधिचिह्नं गण्डस्थलेन नयनेन च सन्दधानौ ।
रत्याद्यशेषशुभदौ समुपेतकामौ श्रीराधिकावरपुरन्दरपुण्यपुञ्जौ ॥४॥
प्रातर्धरामि हृदयेन हृदीक्षणीयं युग्मस्वरूपमनिशं सुमनोहरञ्च ।
लावण्यधाम ललनाभिरुपेयमान-मुत्त्थाप्यमानमनुमेयमशेषवेषैः ॥५॥
प्रातर्ब्रवीमि युगलावपि सोमराजौ राधामुकुन्दपशुपालसुतौ चरिष्ठौ ।
गोविन्दचन्द्रवृषभानुसुतौ वरिष्ठौ सर्वेश्वरौ स्वजनपालनतत्परेशौ ॥६॥
प्रातर्नमामि युगलाङ्घ्रिसरोजकोषमष्टाङ्गयुक्तवपुषा भवदुःखदारम् ।
वृन्दावने सुविचरन्तमुदारचिह्नं लक्ष्म्या उरोजधृतकुङ्कुमरागपुष्टम् ॥७॥
प्रातर्नमामि वृषभानुसुतापदाब्जं नेत्रालिभिः परिणुतं व्रजसुन्दरीणाम् ।
प्रेमातुरेण हरिणा सुविशारदेन श्रीमद्व्रजेशतनयेन सदाऽभिवन्द्यम् ॥८॥
सञ्चिन्तनीयमनुमृग्यमभीष्टदोहं संसारतापशमनं चरणं महार्हम् ।
नन्दात्मजस्य सततं मनसा गिरा च संसेवयामि वपुषा प्रणयेन रम्यम् ॥९॥

प्रातः स्तवमिमं पुण्यं प्रातरुत्थाय यः पठेत् ।
सर्वकालं क्रियास्तस्य सफलाः स्युः सदा ध्रुवाः ॥१०॥



श्रीसुदर्शनचक्रावतार आद्याचार्य जगद्गुरु श्रीभगवन्निम्बार्काचार्य प्रणीत-

# ॥ श्रीराधाष्टकस्तोत्रम् ॥

नमस्ते श्रियै राधिकायै परायै नमस्ते नमस्ते मुकुन्दप्रियायै ।
सदानन्दरूपे ! प्रसीद त्वमन्तः प्रकाशे स्फुरन्ती मुकुन्देन सार्धम् ॥१॥
स्ववासोपहारं यशोदासुतं वा स्वदध्यादिचौरं समाराधयन्तीम् ।
स्वदाम्नोदरे या बबन्धाशु नीव्या प्रपद्ये नु दामोदरप्रेयसीं ताम् ॥२॥
दुराराध्यमाराध्य कृष्णं वशे तं महाप्रेमपूरेण राधाऽभिधाऽभूः ।
स्वयं नाम कीर्त्या हरौ प्रेम यच्छ प्रपन्नाय मे कृष्णरूपे समक्षम् ॥३॥
मुकुन्दस्त्वया प्रेमदोरेण बद्धः पतङ्गो यथा त्वामनुभ्राम्यमाणः ।
उपक्रीडयन् हार्दमेवानुगच्छन् कृपा वर्तते कारयातो मयीष्टिम् ॥४॥
व्रजन्तीं स्ववृन्दावने नित्यकालं मुकुन्देन साकं विधायाङ्कमालम् ।
समामोक्ष्यमाणाऽनुकम्पाकटाक्षैः श्रियं चिन्तयेत्सच्चिदानन्दरूपाम् ॥५॥
मुकुन्दानुरागेण रोमाञ्चिताङ्गैरहं व्याप्यमानां तनुस्वेदबिन्दुम् ।
महाहार्दवृष्ट्या कृपापाङ्गदृष्ट्या समालोकयन्तीं कदा त्वां विचक्षे ॥६॥
यदङ्कावलोकं महालालसौघं मुकुन्दः करोति स्वयं ध्येयपादः ।
पदं राधिके ते सदा दर्शयान्तर्हृदिस्थं नमन्तं किरद्रोचिषं माम् ॥७॥
सदा राधिका नाम जिह्वाग्रतः स्यात् सदा राधिकारूपमक्ष्यग्र आस्ताम् ।
श्रुतौ राधिकाकीर्त्तिरन्तः स्वभावे गुणा राधिकायाः श्रिया एतदीहे ॥८॥
इदं त्वष्टकं राधिकायाः प्रियायाः पठेयुः सदैवं हि दामोदरस्य ।
सुतिष्ठन्ति वृन्दावने कृष्णधाम्नि सखीमूर्तयो युग्मसेवानुकूलाः ॥९॥



आद्याचार्यजगद्गुरुभवगन्निम्बार्काचार्यपादपद्माश्रित श्रीमदौदुम्बराचार्यवर्यप्रणीतं-

# ॥ श्रीनिम्बार्क-स्तोत्रम् ॥

श्रीमते सर्वविद्यानां प्रभवाय सुब्रह्मणे ।
आचार्याय मुनीन्द्राय निम्बार्काय नमो नमः ॥१॥
निम्बादित्याय देवाय जगज्जन्मादिकारिणे ।
सुदर्शनावताराय नमस्ते चक्ररूपिणे ॥२॥
नमः कल्याणरूपाय निर्दोषगुणशालिने ।
प्रज्ञानघनरूपाय शुद्धसत्वाय ते नमः ॥३॥
सूर्यकोटिप्रकाशाय कोटीन्दुशीतलाय च ।
शेषानिश्चिततत्त्वाय तत्त्वरूपाय ते नमः ॥४॥
विदिताय विचित्राय नियमानन्दरूपिणे ॥
प्रवर्तकाय शास्त्राणां नमस्ते शास्त्रयोनये ॥५॥
वसतां नैमिषारण्ये मुनीनां कार्यकारिणे ।
तन्मध्ये मुनिरूपेण वसते प्रभवे नमः ॥६॥
लीलां संपश्यते नित्यं कृष्णस्य परमात्मनः ।
निम्बग्रामनिवासाय विश्वेशाय नमो नमः ॥७॥
स्थापिता येन द्वार्वत्यां तप्तमुद्रा कलौ युगे ।
निम्बार्काय नमस्तस्मै दुष्कृतामन्तकारिणे ॥८॥
य इदं पठते स्तोत्रं निम्बादित्यस्य बुद्धिमान् ।
तस्य क्वापि भयं नास्ति सूर्यस्य तमसीव तु ॥९॥



श्रीमन्निखिलमहीमण्डलाचार्य, चक्रचूडामणि, सर्वतन्त्र-स्वतन्त्र,
द्वैताद्वैतप्रवर्तक, यतिपतिदिनेश, राजराजेन्द्रसमभ्यर्चितचरणकमल,
भगवन्निम्बार्काचार्यपीठविराजित, अनन्तानन्त श्रीविभूषित -



जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर

## श्रीराधासर्वेश्वरशरणदेवाचार्य
## श्री ''श्रीजी'' महाराज

अखिल भारतीय श्रीनिम्बार्काचार्यपीठ,
श्रीनिम्बार्कतीर्थ-सलेमाबाद

अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर श्रीराधासर्वेश्वर-शरणदेवाचार्य श्री ''श्रीजी'' महाराज का जन्म विक्रम संवत् 1986 वैशाख शुक्ल 1 शुक्रवार तदनुसार दिनांक 10 मई 1929 को निम्बार्कतीर्थ (सलेमाबाद) में हुआ। आपकी माताश्री का नाम स्वर्णलता (सोनीबाई) एवं पिताश्री का नाम श्रीरामनाथजी शर्मा गौड़ इन्दोरिया था। आप जैसे नक्षत्रधारी महापुरुष के जन्म से यह विप्र वंश धन्य हुआ है। आपश्री 11 वर्ष की अल्पावस्था में वि.सं. 1997 आषाढ़ शुक्ल 2 रविवार (रथयात्रा) के शुभावसर पर अनन्त [illegible] जगद्गुरु श्रीनिम्बार्काचार्य श्रीबालकृष्णशरणदेवाचार्य श्री ''श्रीजी'' [illegible]ष्णवी दीक्षा से दीक्षित होकर आचार्य पीठ के उत्तराधिकारी नियुक्त हुए। वि.सं. 2000 में पूज्य गुरुदेव के गोलोकवास होने पर 14 वर्ष की अवस्था में ज्येष्ठ शुक्ल 2 शनिवार दिनांक 5 जून 1943 को आचार्यपीठ पर आसीन हुए। तदनन्तर 4 वर्ष तक श्रीधाम वृन्दावन में न्याय-व्याकरण-वेदान्त आदि शास्त्रों का अध्ययन किया। व्रजविदेही चतुः सम्प्रदाय श्रीमहान्त श्रीधनञ्जयदासजी काठिया बाबा महाराज तर्क-तर्कतीर्थ जैसे महानुभावों का आपको संरक्षण प्राप्त हुआ। आपश्री के आचार्यत्वकाल में वैष्णव चतुःसम्प्रदायों के आचार्यों, श्रीमहन्तों, सन्त-महात्माओं, समस्त शंकराचार्यों, श्रीकरपात्रीजी महाराज, महामण्डलेश्वरों, देश के मूर्धन्य मनीषियों, राजा-महाराजाओं, राजनेताओं के साथ निकटतम घनिष्ठ सम्पर्क बढ़ा।

श्रीनिम्बार्क सम्प्रदाय का चतुर्दिक् विस्तार हुआ। वि.सं. 2001 में आपश्री ने 15 वर्ष की अवस्था में कुरुक्षेत्र के विराट् साधु सम्मेलन में जगद्गुरु पुरीपीठाधीश्वर श्रीभारतीकृष्णातीर्थजी महाराज के स[illegible]वधान में अध्यक्ष पद को अलंकृत किया।

आपश्री के कार्यकाल में श्रीनिम्बार्काचार्य स्पेशल ट्रेन द्वारा तीनधाम सप्तपुरी की यात्रा सम्पन्न हुई। प्रयाग, हरिद्वार, ( वृन्दावन ) उज्जैन, नासिक इन चारों स्थानों के कुम्भ पर्वों पर अनेकश: श्रीनिम्बार्कनगर में समायोजित धार्मिक अनुष्ठानों, धर्माचार्यों के सदुपदेशों, विविध सम्मेलनों द्वारा समग्र जन समुदाय को सन्मार्ग की ओर प्रेरित किया जाता रहा है। इसी प्रकार सं. 2026 में व्रजयात्रा, 2031 में विराट् सनातन धर्म सम्मेलन, 2047 में श्रीमुरारी बापू की रामकथा, 2050 में स्वर्ण जयन्ती समारोह के अवसर पर अ. भा. विराट् सनातन धर्म सम्मेलन आदि आयोजनों द्वारा जो धार्मिक चेतना जन-जन में स्फुरित करायी गयी वह सदा स्मरणीय है। प्रत्येक अधिकमास में आचार्यपीठ पर आयोजित होने वाले अष्टोत्तरशतभागवत, यज्ञानुष्ठान, प्रवचन, श्रीरासलीलानुकरण, श्रीरामलीला आदि कार्यक्रम भी सदा प्रेरणाप्रद रहते हैं। आप द्वारा प्रतिदिन किया जाने वाला श्रीयुगलनाम-संकीर्तन भी श्रवणीय होता है। सन् 1966में दिल्ली के विराट् गो-रक्षा सम्मेलन में आपश्री का सपरिकर पादार्पण हुआ था। इस अवसर पर स्वामी श्रीकरपात्रीजी महाराज एवं अन्य धर्माचार्यों से जो विचार विमर्श हुआ वह परम ऐतिहासिक है।

आपश्री ने अपने आचार्यत्व काल में जितना देश-देशान्तरों में सम्प्रदाय का वर्चस्व बढाया है उतना ही देवालयों के निर्माण, जीर्णोद्धार, शैक्षणिक संस्थाओं का निर्माण-सञ्चालन, साहित्य प्रकाशन, नूतन ग्रन्थ रचना, गोशाला, मुद्रणालय आदि संस्थाओं द्वारा आचार्यपीठ का सर्वतोभावेन विकास किया है। आपश्री द्वारा रचित भारत-कल्पतरु ग्रन्थ का विमोचन भारत के उपराष्ट्रपति डॉ. श्रीशंकरदयालजी शर्मा ने दिल्ली में किया था। इसी प्रकार आपके अन्य ग्रन्थों का मूर्द्धन्य राजनेताओं, शीर्षस्थ महापुरुषों, जगद्गुरुओं द्वारा विमोचन समारोह सम्पन्न हुये हैं एवं आप द्वारा प्रणीत रचनाओं पर तीन-चार शोधप्रबन्ध भी प्रस्तुत हुए हैं जो मननीय हैं, आप द्वारा रचित ३५ ग्रन्थ हैं। अस्वस्थ अवस्था में भी आपश्री निरन्तर क्रियाशील रहते हैं। आपश्री का संरक्षण पाकर और आपश्री के महान् व्यक्तित्व व कृतित्व से श्रीनिम्बार्क सम्प्रदाय किंवा सनातन धर्म जगत् विशेषत: उपकृत हुआ है। आपके मधुर दर्शन की एक झलक पाने और वचनामृत सुनने के लिए धार्मिक जन सदा समुत्सुक रहते हैं।

Printed at : Print 'O' Land, Jaipur • 2212694